22

O.R.I. SERIES No. 178

श्रीवेङ्कामात्यविरचितः

# उर्वशीसार्वभौमेहामृगः

(सम्पादककृत 'ललिता' टिप्पण्या समलङ्कृतः)

# URVAŚĪSĀRVABHOUMEHĀMṚGAḤ

OF

## ŚRI VENKĀMĀTYA

(with 'Lalithā' Ṭippaṇi of the Editor)

Critically Edited
by
Vidwān, T. V. SATHYANĀRĀYAṆA, M.A.




ORIENTAL RESEARCH INSTITUTE
UNIVERSITY OF MYSORE
MYSORE
1993

Price : Rs. 16–20

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE SERIES–178

मैसूरुविश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला — १७८

श्रीवेङ्कामात्यविरचितः

# उर्वशीसार्वभौमेहामृगः

सम्पादककृत 'ललिता' टिप्पण्या समलङ्कृतः

# URVAŚĪ SĀRVABHOUMĒHĀMṚGAH

OF

VEṄKĀMĀTYA

With Lalitha Tippani of the Editor

प्राच्यविद्यासंशोधनालयः, मैसूरु
ORIENTAL RESEARCH INSTITUTE, MYSORE
1993

मैसूरुविश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला — १७८

श्रीविङ्कामात्यविरचितः

# उर्वशीसार्वभौमेहामृगः

सम्पादककृत 'ललिता' टिप्पण्या समलङ्कृतः

प्रधानसम्पादकः

विद्वान् डा. एम्. आर्. वीरभद्रस्वामी, एम्.ए. पि,हेच्.डि.
निर्देशकः, प्राच्यविद्यासंशोधनालयः
स्नातकोत्तरसंस्कृताध्ययनसंशोधनविभागस्य
प्रवाचकः मुख्यश्च
मानसगङ्गोत्री, मैसूरु

प्राच्यविद्यासंशोधनालयः, मैसूरु
१९९३

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE SERIES--178

# URVAŚĪ SĀRVABHOUMĒHĀMṚGAH

OF

VEṄKĀMĀTYA

With 'Lalitha' Tippani of the Editor

*General Editor :*
Vidwan Dr. M. R. VEERABHADRASWAMY, M.A., Ph.D.
Director, Oriental Research Institute, Mysore and
Reader and Chairman,
Department of Studies in Sanskrit,
Manasagangotri, Mysore

ORIENTAL RESEARCH INSTITUTE
MYSORE—570005
1993

मैसूरुविश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला — १७८

श्रीवेङ्कामात्यविरचितः

# उर्वशीसार्वभौमेहामृगः

सम्पादककृत 'ललिता' टिप्पण्या समलङ्कृतः

सम्पादकः

'प्रतिभापटुः' 'वेदसूक्तविद्यासागरः'
विद्वान् टि. वि. सत्यनारायणः, एम्.ए.
अलङ्कारव्याकरणशास्त्रविद्वान्
संस्कृत एम्. ए. संस्कृतकोविदः
सहायकसंशोधकः—I
प्राच्यविद्यासंशोधनालयः, मैसूरु

प्राच्यविद्यासंशोधनालयः, सूमैरु
१९९३

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE SERIES-178

# URVAŚĪ SĀRVABHOUMĒHĀMṚGAH

OF

## VEṄKĀMĀTYA

**With 'Lalitha' Tippani of the Editor**

*Editor :*

'Prathibhapatu' 'Vedasuktavidyasagara'
Vidwan T. V. SATHYANARAYANA, M. A.
Alankara-Vyakaranashastra Vidwan,
M. A. in Sanskrit, Samskrita Kovida
Senior Research Assistant
Oriental Research Institute, Mysore

ORIENTAL RESEARCH INSTITUTE
MYSORE
1993

## FOREWORD

I am extremely happy to present Venkamatya's 'Urvasisarvabhoumehamrgah' to the lovers of Sanskrit Literature. This work, critically edited with notes by Vidwan T. V. Satyanarayana M.A. is being published by the Oriental Research Institute, University of Mysore, Mysore.

The author of this 'Ihamrga' Dewan Venkappayya was a great prolific writer of the 18th Century A.D., was also known as Venkamatya. His contribution to the dramatic world is great both qualitatively and quantitatively.

He has exemplified all major types of Sanskrit Drama. Venkamatya was a minister of Mysore serving normally under the Mysore Kings, Krishnaraja Wodeyar II, Nanjaraja Wodeyar and Bettada Chamaraja Wodeyar, but actually under Hyder Ali from 1763 A.D. to 1780 A.D. He was an eminent scholar in Sanskrit and Kannada. He was also interested in music and painting.

Pradhani Venkappayya played a very prominent role in the History of Mysore, during the 18th Century. He belongs to a village Ramapura which is mentioned in almost all his works, which is on the banks of the Kapini river near Cattanahalli, about 10 miles South-West of Mysore.

It is really admirable that Venkappaiah could write such fine works inspite of his heavy responsibilities in political and social life.

The editor Vidwan T. V. Satyanarayana has highlighted the charming aspects of the present work critically by giving profuse notes. He has utilised two manuscripts available in Oriental Research Institute in editing. Vidwan T. V. Satyanarayana, deserves to be thanked for his meticulous and scholarly work in editing this work. He has also elucidated the peculiarities of the 'Ihamrga' and highlighted the special features of the present work.

It is my pleasant duty to express our gratitude to our beloved Vice-Chancellor, Prof. M. Madaiah who has given us continuous encouragement to our research and publication work. I thank the authorities of the University for their unstinted co-operation and encouragement.

I wish to express our thanks to Smt. Sashi Moorthy, Guruvarya Press, Mysore for having printed this volume nicely. Our thanks are also due to the Director, Mysore University Printing Press, Mysore for his co-operation.

I am sure Sanskrit scholors and Sanskrit lovers and admirers will gladly welcome this valuable publication.

**Dr. M. R. Veerabhadra Swamy**
*Director*
ORIENTAL RESEARCH INSTITUTE
Mysore

Mysore
Date: 8-12-92

## प्रस्तावना

नितान्तं हृष्यति मे मनः यत् "उर्वशीसार्वभौमेहामृग" नामकोऽयं ग्रन्थः प्राच्यविद्यासंशोधनालयात् प्रकाशं नीयत इति। अयं च ग्रन्थः प्राच्यविद्यासंशोधनालयग्रन्थमालायाः एकशताधिकाष्टसप्ततितमं (178) पुष्पम्। पुष्पस्यास्य सुगन्धेन सज्जनसमुदायः तोषं प्राप्नोतु इति भावये। अयं संशोधनालयः शास्त्रग्रन्थान् तथा साहित्यग्रन्थांश्च अप्रकटितान् अपूर्वार्थगर्भितान् परिगणय्य तादृशग्रन्थानेव प्रकटीकरोति। आसेतुहिमाचलं सञ्चार्य, अमूल्यानां हस्तप्रतीनां सङ्ग्रहणम्, तासां संरक्षणम्, संशोधनार्थं स्वीकरणम्, प्रकटनम्, सूक्ष्मचित्रीकरणद्वारा एतासां स्थिरीकरणं च अस्याः संस्थायाः प्रधानं कर्म। वर्तन्ते चात्र शास्त्रविदः तथा साहित्यविदश्च विद्वांसः। ते च ग्रन्थसम्पादनकर्मणि निमग्नाः एतादृशान् अपूर्वग्रन्थान् सम्पादयन्ति॥

प्रकृते प्रकाशपदं नीयमानोऽयम् ईहामृगः दृश्यकाव्यप्रभेदेषु दशरूपकेष्वन्यतमः। असौ च ग्रन्थः वेङ्कामात्येन रचितः। स तु कविः कर्नाटकप्रान्तीयः। संस्कृतकर्नाटकान्ध्रभाषासु निपुणः। संस्कृतभाषायां नाटकप्रकरणरूपरूपकद्वयं विहाय अवशिष्टेषु भाणाद्यष्टप्रभेदेषु ग्रन्थाः अनेन रचिताः वर्तन्ते। तेषु मध्येऽन्यतमः उर्वशीसार्वभौमेहामृगः। अत्र उर्वशी अप्सरस्त्री, पुरूरवास्तु सार्वभौमः। अनयोः उर्वशीपुरूरवसोः कथा,

ऋग्वेदे, बृहद्देवतायां, सर्वानुक्रमणिकायां, शतपथब्राह्मणे, बोधायनश्रौतसूत्रे, महाभारते, भागवते च वर्तते। एवं वेदपुराणादिषु प्रसिद्धामिमां कथामवलम्ब्य कविरयं वेङ्कामात्यः उर्वशीसार्वभौमेहामृगं व्यरचयत्।

न केवलमसौ वेङ्कामात्यः दशरूपकेष्वन्तर्भूताष्टप्रभेदानाधिकृत्य ग्रन्थान् व्यचीक्लृपत्। अपि तु तदन्यानपि, जगन्नाथविजयं, कुशलवचम्पूः, सुधाझरी, इत्यादिकान् ग्रन्थान् व्यरचयत्। न केवलं संस्कृतभाषायाम् अपि तु कर्नाटकभाषायां तथा आन्ध्रभाषायां च एषः अनेककृतीः अरचितवान्। विशेषतः असौ मैसूरुसंस्थाने अमात्यपदवीमलङ्कृतवान्। अमात्योऽपि भूत्वा काव्यरचनाकौशलं सम्पादितवानिति महदाश्चर्यम्। अतः कविनानेन कृतानां रूपकप्रभेदानां सम्पादनं तथा प्रकाशनं चावश्यं करणीयमिति निश्चितं पूर्वमेव। तदनुसारेण अद्यावधि, लक्ष्मीस्वयंवरसमवकारः, सीताकल्याणवीथी, रुक्मिणीमाधवाङ्कः, वीरराघवव्यायोगः, इति ग्रन्थचतुष्टयं मुद्रितम्। पञ्चमोऽयम् उर्वशीसार्वभौमेहामृगाख्यो ग्रन्थः इदानीं सहृदयानां सविधे समर्पितो वर्तते। सुमधुरशैल्या, कथासौष्ठवेन च सुनिबद्धः अङ्कचतुष्टयात्मकोऽयम् ईहामृगः सहृदयानां तोषाय भवेदिति आशासे।

ग्रन्थस्यास्य संशोधनसम्पादकः विद्वान् टि वि. सत्यनारायणः। स तु न केवलं ग्रन्थं सम्पादितवान् किन्तु ग्रन्थाध्ययनकर्तॄणां साहाय्यार्थं 'ललिता' नामिकां सुललितां टिप्पणीं रचितवान्। अस्यामेव संस्थायां विद्यमाने द्वे हस्तप्रती प्रतिगृह्य विद्वत्पूर्णतया सम्पादनकर्मानेन व्यधायि।

असौ तु अलङ्कारशास्त्रे तथा व्याकरणशास्त्रे च निपुणः । संस्कृत एं.ए. पदवीधरः । विद्वत्परीक्षयोः तथा एं.ए. परीक्षायां च प्रथमस्थानमनेन अलाभि । सुवर्णपदकानि चानेन प्राप्तानि । अन्यान्यासु पाठशालासु तथा कलाशालासु दशाधिकवर्षपर्यन्तं अध्यापनं कृतवान् । तथानेकभाषण-स्पर्धासु भागमूढ्वा बहुमानं प्राप्तवान् । संस्कृतभाषायां तथा कर्नाटक-भाषायां षष्ठ्यधिकलेखनानि अनेन लिखितानि मुद्रापितानि च । संस्कृतकर्नाटकानुवादग्रन्था अपि अनेन लिखिताः मुद्रिताश्च वर्तन्ते । धार्मिकशास्त्रीयसाहित्यिकोपन्यासकलासु निपुणोऽसौ अद्यावधि नैकविधस्थलेषु पञ्चशताधिकोपन्यासान् संस्कृतकर्णाटकोभयभाषासु कृतवान् इति निवेदयितुं अतीव तोषस्सञ्जायते । अस्य विद्वत्तां तथा प्रतिभां दृष्ट्वा विविधसङ्घसंस्थाः "प्रतिभापटुः" "वेदसूक्तविद्यासागरः" इति प्रशस्तिप्रदानेन इमं पुरस्कृतवत्यः । एतादृशाः विद्वांसः अस्मिन् संशोधनालये वर्तन्त इति महदिदं प्रमोदस्थानम् ॥

सुधीविधेयः
'पण्डितरत्नम्' 'वेदान्तभूषणम्' 'विद्यावाचस्पतिः' 'वेदान्तसमर्थः'
न्याय-वेदान्तविद्वान् आर्. जि. माळगी, एम्.ए.
उपनिर्देशकः
प्राच्यविद्यासंशोधनालयः

मैसूरु—५
२६-१२-९२

## —विषयाः—

Page No.



———



# उपोद्धातः

लोकोत्तरवर्णनानिपुणकविकर्म काव्यं श्रव्य-दृश्यभेदेन द्विविधम्। श्रव्यकाव्यं पद्य गद्य-चम्पूभेदेन त्रिविधम्। दृश्यकाव्यं पुनः नाटकादि-भेदेन दशधा भिद्यते। तदुक्तं दशरूपके—

नाटकं सप्रकरणं भाणः प्रहसनं डिमः।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति॥ (१-८)

सामान्यतः संस्कृतसाहित्ये दशरूपकप्रभेदानामपि नाटकमित्येव व्यवहारः अस्ति। परं नाटकं दशरूपकेषु अन्यतमम्। संस्कृतवाङ्मये नाटकानि बहूनि दृश्यन्ते। प्रकरणमपि किञ्चन दृश्यते। परं नाटकप्रकरणे विहाय इतररूपकप्रभेदानाम् उदाहरणानि अल्पीयांस्येव वर्तन्ते। अथापि केचन नाटककाराः इतररूपकप्रभेदानामपि उदाहरणरूपेण कृतीः रचितास्सन्ति। तत्र 'कृष्णविजयव्यायोगः' 'कौण्डिण्यप्रहसनम्' 'दामकप्रहसनम्' 'नटवाटप्रहसनम्' 'पञ्चायुधप्रपञ्चभाणः' 'पार्थपराक्रमव्यायोगः' 'मत्तविलासप्रहसनम्' 'मध्यमव्यायोगः' 'मुकुन्दानन्दभाणः' 'रससदनभाणः' 'रसिकरञ्जनभाणः' 'लम्बोदरप्रहसनम्' 'लटकमेलकप्रहसनम्' 'वसन्ततिलकभाणः' 'शृङ्गारतिलकभाणः' 'शृङ्गारभूषणभाणः' 'शृङ्गारसर्वस्वभाणः' 'सरसकविकुलानन्दभाणः' 'हास्यार्णवप्रहसनम्' 'धनञ्जयविजयव्ययोगः' इत्यादयः दशरूपकस्य अन्यप्रभेदानाम् उदाहरण-रूपेण दृश्यन्ते।

परं विशेषतः प्रसिद्धाः नाटककारास्सर्वे नाटकरचनायामेव विशेषतः आसक्ताः अभूवन्। तत्र कारणमप्यस्ति-नाटके पञ्चसन्धीनाम्, तथा सन्ध्यङ्गानां सर्वेषां मेलनं दृश्यते। पात्रविस्तारः, कथाविस्तारः, वर्णना-

चातुर्यं, रसास्वादनसन्निवेशश्च सहृदयानां विशेषतः भूरि वर्तन्ते। अन्येषु प्रकारेषु एकाङ्कस्य, द्वयोस्त्रयाणां सन्धीनां सङ्कलनस्य, पात्रबाहुल्याभावस्य च कारणेन, तेषां रचनाकार्ये ते अतीव नासक्ताः इत्यूहयितुं शक्यते। परमिदमूहामात्रम्। यतः अन्यैः प्रभेदैरपि सहृदयरञ्जकत्वं भवति इत्यत्रापि वास्तविकत्वमस्ति। एतस्य 'मध्यमव्यायोगः' उदाहरणं भवति। अनेन व्यायोगेन सहृदयाः अतीव आनन्दितास्सन्ति इत्यत्र न काप्युत्प्रेक्षा। अतः दशरूपकस्य इतरप्रभेदानां रचनाकार्येऽपि केचन प्रवृत्ताः। तेषु वेङ्कामात्यः अप्येकः। अस्य समग्रपरिचयः उत्तरत्र क्रियते। सङ्क्षेपतः कथ्यमाने नाटकप्रकरणे विहाय इतरेषु अष्टसु प्रभेदेष्वपि एकैकां कृतिं रचितवानस्ति वेङ्कामात्योऽयमिति अन्तस्साक्ष्य-बहिस्साक्ष्यादिभिः ज्ञायन्ते। तदेव विशदतया उच्यतेऽधुना।

## ईहामृगलक्षणम्

दशरूपकेषु 'ईहामृगः' एकः भेदः। तल्लक्षणं दशरूपके एवं निरूपितमस्ति—

'मिश्रमीहामृगे वृत्तं चतुरङ्कं त्रिसन्धिकम्।
नरदिव्यावनियमान्नायकप्रतिनायकौ॥
ख्यातौ धीरोद्धतावन्त्यो विपर्यासादयुक्तकृत्।
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः॥
शृङ्गाराभासमप्यस्य किञ्चित् किञ्चित् प्रदर्शयेत्।
संरम्भं परमानीय युद्धं व्याजान्निवारयेत्।
वधप्राप्तस्य कुर्वीत वधं नैव महात्मनः॥

(द० रू० ३-७२-७५)

मृगवदलभ्यां नायिकां नायकः अस्मिन् ईहते इति ईहामृगः । ख्याताख्यातं वस्तु । अन्त्यः प्रतिनायकः । विपर्यासात् विपर्ययज्ञानात् अयुक्तकारी विधेयः इति प्रतापरुद्रीयरत्नापणव्याख्याने एवमुक्तम् । गर्भावमर्शरहिताखयः सन्धयो यस्मिन् तत् त्रिसन्धिकम् । आभासरसयोरनुरागशून्यंनायिकानुरक्तत्वादिति भावः । अत एवोक्तं दशरूपके—' दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः इति । अवधं युद्धमजायुद्धकल्पमित्यर्थः इति ।

साहित्यदर्पणकारेण विश्वनाथेन षष्ठपरिच्छेदे ईहामृगलक्षणमित्थं भणितमस्ति । तद्यथा—

ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्तितः ।
मुखप्रतिमुखे सन्धी तत्र निर्वहणं तथा ॥
नरदिव्यावनियमौ नायकप्रतिनायकौ ।
ख्यातौ धीरोद्धतावन्यो गूढभावादयुक्तकृत् ॥
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ।
शृङ्गाराभासमप्यस्य किञ्चित् किञ्चित् प्रदर्शयेत् ॥
पताकानायका दिव्या मर्त्या वापि दशोद्धताः ।
युद्धमानीय संरम्भं परं व्याजान्निवर्तते ॥
महात्मानो वधप्राप्ता अपि वध्यास्स्युरत्र नो ।
एकाङ्को देव एवाऽत्र नेत्याहुः परे पुनः ॥
दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे ।

मिश्रं ख्याताख्यातम् । अन्त्यः प्रतिनायकः । पताकानायकास्तु नायकप्रतिनायकयोर्मिलिता दश । नायको मृगवत् अलभ्यां नायिकामत्र ईहते वाच्छतीति ईहामृगः ॥

यथा—' कुसुमशेखरविजयादिः इति ॥

अस्य—लक्ष्मीव्याख्याने विस्तृतं विवरणं समीचीनम् एवमुक्तमस्ति—

ईहामृगाख्यं रूपकं निरूपयति— ईहामृग इति। 'मिश्रं ख्याताख्यातो वृत्तान्तो यत्र स तथोक्तः, चत्वारोऽङ्का यस्मिन् स तथोक्तः रूपकविशेषः ईहामृगः प्रकीर्तितः। व्युत्पत्तिलभ्योऽर्थो विवरणे स्पष्टः। तत्र ईहामृगे मुखप्रतिमुखे सन्धी भवेताम्। तथा निर्वहणं च सन्धिर्भवेत्। अनियमौ नियमरहितौ नरौ वा दिव्यौ वा नरदिव्यौ वा नायकप्रतिनायकौ भवेताम्। एवञ्च नरो नायकः दिव्यश्च प्रतिनायकः, तथा नरः प्रतिनायकः दिव्यश्च नायकोऽत्र भवितुं शक्नोतीति स्फुटोऽर्थः। तयोराद्यो धीरः अन्त्यः उद्धतः स च गूढभावात् प्रच्छन्नभावात् अयुक्तकृत् अयुक्तकार्यकारी। स्वस्य रमणमनिच्छन्तीं दिव्यस्त्रियं दिव्याङ्गनाम् अपहारेण बलात्कारेण आदिपदाच्छलेन च इच्छतः सुरतं कामयमानस्य अस्य प्रतिनायकस्य किञ्चित् किञ्चित् शृङ्गाराभासमपि कविः प्रदर्शयेत् उपवर्णयेत्। दिव्या दिवि भवा मर्त्या मनुष्या वा उद्धतस्वभावा उत्कटप्रकृतयः दश पताकानायकाः 'व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते' इत्युक्तपताकाख्यार्थप्रकृतिसंयुक्ता भवेयुः। तथा च नायकप्रतिनायकौ द्वौ पताकानायका दश इति मिलित्वा दिव्यमर्त्या द्वादशनायका भवेयुरित्यर्थः। परं प्रतिनायकबलं संरंभं क्रोधम्, आनीय प्राप्य स्थितस्य नायकस्य व्याजात् कार्यान्तरच्छलेन युद्धं निवर्तते। निर्वर्तयेदिति पाठे तु परं युद्धस्थानमानीय संरम्भं निर्वर्तयेदित्यर्थः इति वागीशाः। अत्र ईहामृगे महात्मानो लोकाः वधप्राप्ताः वधयोग्या अपि नो वध्याः स्युः। तेषां वधः पुराणादिषु ख्यातोऽपि वधानर्हत्वात् कविभिर्न वर्णनीय इत्यर्थः। अन्यमतं दर्शयितुमाह—एकाङ्क इति। एकः अङ्कः यत्र स एकाङ्कः, अत्र ईहामृगे देव एव नेता नायक

इति पुनः परे आहुः । तदितरे च दिव्यस्त्रीहेतुकं युद्धं नायकाश्च षट् इत्याहुरिति पूर्वेण सम्बन्धः । ईहामृगव्युत्पत्तिं दर्शयति नायको मृगवदिति । अलभ्यां दुष्प्राप्यत्वेन अप्राप्याम् । तथा च अस्मिन्नर्थे ईहामृगशब्दः पृषोदरादित्वात् साधनीयः* ।

## उर्वशीसार्वभौमेहामृगः

अमात्येन वेङ्कामात्येन दशरूपकलक्षणानुसारात् 'उर्वशीसार्वभौमेहामृगः' इत्याख्यो ईहामृगः सुनिबद्धोऽस्ति । उर्वशी अप्सरस्त्री । पुरूरवाः नाम राजा सार्वभौमशब्देन ग्राह्यः । 'उरून् महतोऽपि अश्नुते व्याप्नोति वशीकरोतीति, यावत् । यद्वा उरुं नारायणस्य महर्षेः उरुप्रदेशम् अश्नुते योनित्वेन व्याप्नोतीति । उर्वशी च सार्वभौमश्च उर्वशीसार्वभौमौ । तयोः ईहामृगः उर्वशीसार्वभौमेहामृगः इति विग्रहः । उर्वशीसार्वभौमसम्बन्धी इहामृगः इति फलितोऽर्थः ।

प्रकृतलक्षणानुसारेण अस्मिन् ईहामृगे राजा पुरूरवाः अदिव्यनायकः। अयञ्च मनुष्यः । परमन्ते नायिकां प्राप्नोतीति कृत्वा नायको भवति । सुराधिपः महेन्द्रः प्रतिनायकः । स च दिव्यः । उभावप्यत्र धीरोद्धतौ । उर्वशी अप्सरस्त्री । सा च दिव्याङ्गना । इयमेवाऽत्र नायिका । अस्यामुर्वश्यां नृपमहेन्द्रयोरुभयोरपि अभिलाषः । परमुर्वशी इन्द्रं विहाय राजानं पुरूरवसमेवेच्छति । कथमपि तां लब्धुम् इन्द्रः एतयोर्मध्ये अन्तरायरूपेण आगत्य राज्ञः पुरूरवसः वेषेण तामपहर्तुमपि सन्नद्धो भवति । एतन्मध्ये यदा राजा

* विश्वनाथकृत 'साहित्यदर्पणस्य' आचार्यकृष्णमोहनशास्त्रिकृतलक्ष्मीटीकातः उद्धृतोऽयं भागः । (पृष्ठसंख्या-४३७-४३९) (प्रकाशनम्-चौखम्बा संस्कृत सीरिज् आफिस् बनारस्-१० काशीसंस्कृत ग्रन्थमाला-१४५. द्वितीयं संस्करणम्-१९५५

आगच्छति, तदा महेन्द्रस्य च्छलं सर्वे जानन्ति । ततः उभयोः उर्वश्याः कृते युद्धस्सञ्जायते । अन्ते नारदमुनिरागत्य एतयोर्युद्धं निवारयति । उर्वशी राजानमेव परिणेतुमभिलषति, न पुनर्महेन्द्रम् । तत्पश्चादनयोः परिणयो भवति । अत्र महेन्द्रः अनिच्छन्तीमुर्वशीमीहते । परं सा अमुं नेच्छति । अथापीन्द्रः तस्यां स्वकीयां रतिं प्रकटयतीति कृत्वा रतेरेकमुखत्वात् शृङ्गाराभासः अत्र परिदृश्यते । नृपः पुरूरवा अपि दिव्यामप्सरस्स्त्रियमुर्वशीं मृगवदीहते इति उर्वशीसार्वभौमेहामृगः इति नामधेयमन्वर्थं भवति । उर्वशीकथा वेदपुराणादिषु वर्तते इति कृत्वा तत्र राज्ञः पुरूरवसः प्रेम इति कथया च ख्याताख्यातं मिश्रं वृत्तं भवति । अत्र चत्वारोऽङ्काः वर्तन्ते । मुखप्रतिमुखनिर्वहणसन्धयस्त्रयः अत्र विद्यन्ते । पुरूरवाः देवेन्द्रं जित्वा उर्वशीं नायिकां पर्यणैषीत् इति कृत्वा स एव नायकः । वीररौद्रयोःरसयोः समागमोऽत्र दृश्यते । शृङ्गाराभासोऽपि मध्ये परिदृश्यते । परमत्र वीररस एव मुख्यः । रौद्रशृङ्गाराभासौ तस्य अङ्गरसौ भवतः ।

## उर्वशीपुरूरवसोः कथायाः आकरः

i) उर्वशीपुरूरवसोः कथा इदंप्रथमतया ऋग्वेदे एव परिदृश्यते । ऋग्वेदे संवादसूक्तानि बहूनि वर्तन्ते । तेषु उर्वशीपुरूरवसोः संवाद एव प्रधानतमः अस्ति । सूक्तमिदं ऋग्वेदस्य दशममण्डले वर्तते । पञ्चनवतितमं सूक्तमेतत् । अत्र अष्टादशमन्त्राः विद्यन्ते । उर्वशी दिव्याप्सराः । पुरूरवास्तु मनुजः राजा च । इयं तेन सह भुवि वर्षचतुष्कपर्यन्तं पत्नी भूत्वा सहचरी आसीत् । ततः अन्तर्वत्नी भूता सा तिरोऽभवत् । राजा तामन्वेष्टुं जगाम । एकस्मिन् सरसि इतराभिः अप्सरोभिः क्रीडतीं तां पश्यति । एतावती कथा तत्र लभ्यते । अनयोः संवादः अस्मिन् सूक्ते उपवर्णितः ।

"राजा तां दृष्ट्वा क्षणमात्रं स्थित्वा, मया सह संलप। तेन मम आनन्दो जायते। अहं मदीयं राज्यं, प्रजां, सर्वस्वं च त्यक्त्वा अत्रागच्छमिति" प्रार्थयति। परं सा वदति। अहमलभ्या। त्वया सह मम समागमः आकस्मिकः। अथापि तव गुणानहं सर्वदा स्मरामि। त्वं राजा। प्रजाधर्मं परिपालय। एकस्याः नार्याः कृते शोकः न युक्तः। पुत्रोत्पत्तिपर्यन्तं आवयोस्सम्बन्धः इति निश्चितः आसीत्। अतः मा शुच।

"पुरूरवो मा मृथा मा प्र पप्तो
मा त्वा वृकासो अशिवास उक्षन्।
न वै स्त्रैणानि सख्यानि सन्ति
सालावृकाणां हृदयान्येता ॥
(ऋ॰ सं॰ १० मं–९५ सू–१७ मन्त्रः)

'राजन् त्वं प्राणान् मा त्यज। तव पतनमपि मा भूत्। अशुभाः वृकाः त्वां मा हिंसेयुः। स्त्रीणां सख्यं न वास्तविकं, मिथ्या च। तासां हृदयानि वृकाणां हृदयाणीव। अतः निवर्तस्वेति वदति। अथापि राजा प्रतिनिवर्तयितुं प्रार्थयति। तदा सा अन्ते वदति— 'पुरूरवः मर्त्यस्त्वं हविर्भिः यागे देवान् प्रीणय। तदा त्वं स्वर्गमागत्य अस्माभिस्सह सन्तोषमेष्यसि। अतः अधुना ममाभिलाषं त्यक्त्वा गच्छ*" इति वदति। इयती कथा अष्टादशसु मन्त्रेषु संलग्ना। अनयोः प्रणयः अपूर्वः। एकः मर्त्यः। अन्या तु अप्सराः। एतयोः समागमः सरसि अभूदित्यपि अपूर्वा घटनैव। अनयोः संभाषणकाले

---

* इति त्वा देवा इम आहुरैळ यथेमेतद्भवसि मृत्युबन्धुः।
प्रजा ते देवान् हविषा यजाति स्वर्ग उ त्वमपि मादयासे।
(ऋ॰ सं॰ १० मं–९५ सू–१८ मन्त्रः)

इतराः अप्सरसः अन्तर्हिता आसन् । उर्वशी पुरूरवसः जीवने विद्युदिव आगता, गता च । तस्य सर्वानभिलाषान् सफलयामास । राजा तया सुपुत्रं लेभे । तस्य कुलवृद्धिरपि तयाऽभूत् । अत्र सूक्ते उर्वश्याः सद्गुणः प्रकाशते । सा तस्य सुगुणान् प्रशंसते । तं राजकार्ये प्रवर्तयितु-मपि प्रेरयति । त्वं राजा । सङ्ग्रामभारः तव शिरसि वर्तते । एकस्याः स्त्रियाः कृते मा शुच इत्यप्युपदिशति* । उदात्तरूपेण सा अत्र चित्रिता ।

ii) बृहद्देवतायां सप्तमेऽध्याये अनयोर्विचारः उद्धृतोऽस्ति । पुरा उर्वशी नाम्नी अप्सराः राजर्षौ पुरूरवसि संविदमर्थात् शपथं कृत्वा सहधर्म-चरी सती जीवति स्म । अनयोः संवासं दृष्ट्वा असूयाविष्टः पाकशासनः इन्द्रः तयोर्वियोगार्थं वज्रमादिशति । तदा वज्रः स्वीयया मायया तयोः प्रीतिमभिनत् । राजा तया विरहितः उन्मत्तस्सन् इतस्ततः अटन् एकस्मिन् सरसि पञ्चभिः सखीभिस्सह क्रीडन्तीमभिरूपामुर्वशीम् अपश्यत् । दुःखार्तः राजा पुनरेहीति तां प्रार्थयति । परं सा वदति—'अहमप्राप्या इदानीम् । स्वर्गे पुनः मां प्राप्स्यसीति । इयती कथा अत्र निबद्धा । इदमेवाख्यानं यास्कः संवादमिति, शौनकः इतिहासं मन्यते इत्युक्तम्† ।

---

* महे यत् त्वा पुरूरवो रणायाऽवर्धयन् दस्युहत्याय देवाः । स चा यदासु जहतीष्वत्कममानुषीषु मानुषो निषेवे ।

† प्र तद्दुःसीम इत्यृग्भ्यां राज्ञां दानं च शंसति ।
पुरूरवसि राजर्षावप्सरास्तूर्वशी पुरा ।
न्यवसत्संविदं कृत्वा तस्मिन्धर्मं चचार च ।
तया तस्य च संवासमसूयन् पाकशासनः ।
पैतामहं चानुरागमिन्द्रवच्चापि तस्य तु ।
स तयोस्तु वियोगार्थं पार्श्वस्थं वज्रमब्रवीत् ।
प्रीतिं भिन्द्धि तयोर्वज्र मम चेदिच्छसि प्रियम् ।
तथेत्युक्त्वा तयोः प्रीतिं वज्रोऽभिनत् स्वमायया ॥
ततस्तया विहीनस्तु चचारोन्मत्तवन्नृपः ।

iii) पद्मपुराणस्थकथा एवमस्ति—

—तारा चन्द्रयोः पुत्रः बुधः । बुधः इलायां पुरूरवसं नामकं पुत्रं लेभे । सः पुरूरवाः अश्वमेधशतं स्वतेजसा अकरोत् । सः हिमालये तपस्तेपे । ब्रह्मणः वरात् लोकैश्वर्यञ्चागात् । सप्तद्वीपपतिश्च संवृत्तः । केशिप्रभृतयो दैत्याः तद्भृत्यत्वमुपागताः । तस्य रूपसौन्दर्येण अप्सराः उर्वशी मोहिता बभूव । एकदा राजा आत्मानं द्रष्टुमागतान् धर्मार्थकामान् अर्घ्यपाद्यादिभिः पूजयामास । परं धर्ममधिकां पूजां चक्रे । तेन कुपितः अर्थः 'लोभात् त्वं नाशमेष्यसीति शशाप' । कामोऽपि 'त्वं गन्धमादने कुमारवने उर्वशीभवात् वियोगात् उन्मत्तो भविष्यसीति शशाप । धर्मस्तु तं सान्त्वयन् 'त्वं धार्मिकः चिरायुश्च भविष्यसि । तव सन्ततिः आचन्द्रतारकं वृद्धिमायाति । उर्वशीकामसंभवः उन्मादः षष्टिवर्षाणि यावद्वर्तते । ततः सा अप्सराः तव वशमेष्यती' त्युक्त्वा अन्तरगात् ।

पुरूरवाः प्रतिदिनं देवेन्द्रं द्रष्टुं गच्छति स्म । एकदा देवेन्द्रेण सह रथे गच्छन् सः उर्वशीं चित्रलेखां च अपहरन्तं केशिनामकं राक्षसमन्तरिक्षे

---

चरन् सरांसि सोऽपश्यत् अभिरूपामिवोर्वशीम् ।
सखीभिरभिरूपाभिः पञ्चभिः पार्श्वतो वृताम् ।
तामाह पुनरेहीति दुःखात्मा त्वब्रवीन्नृपम् ।
अप्राप्याहं त्वयाद्येह स्वर्गे प्राप्यसि मां पुनः ॥

आह्वनं प्रति चाख्यानमितरेतयोरिदम् ।
संवादं मन्यते यास्क इतिहासं तु शौनकः ॥

(बृहद्देवता—सप्तमोऽध्यायः १४६–१५३ श्लोकाः)

प्रकाशनम्—(The Brhad-devata of Saunaka)
Edited by A. A. Macdonell, Part-I
Motilal Banarasidas 1965—p. No. 91
O.R.I. Book No. A. 4129

दृष्ट्वा तेन सह नियुध्य तं निर्जित्य उर्वशीमिन्द्राय ददौ। तेन प्रीतः इन्द्रः नियमेनैकेन उर्वशीं राज्ञे प्रादात्। एकदा भरतः मेनकां, रम्भामुर्वशीं च "लक्ष्मीस्वयंवरं" नाम नाटकमभिनेतुमादिदेश। लक्ष्मीपात्राभिनयसमये उर्वशी पुरूरवसं दृष्ट्वा कामपीडिता सती पुरातनवेदितं सर्वमभिनयं विस्मृता। तेन कुपितः भरतः— 'तस्य वियोगात् भूतले उर्वशी पञ्चपञ्चाशदब्दानि लता भूता भविष्यति। पुरूरवाः पिशाचत्वमेत्य तत्रैव आस्तो भविष्यतीति च शशाप। ततः सा उर्वशी तं चिरं भर्तारमकरोत्।

शापानुभवनान्ते बुधसूनुना पुरूरवसा उर्वशी आयु-दृढायु-वश्यायु-धनायु-वृत्तिवान् वसु-दिविजात-सुबाहुनामकानष्टौ सुतान् लेभे इति [1]पद्मपुराणकथा।

ii) भागवते उर्वशीपुरूरवसोः कथा —

पुरा सोमतारयोः पुत्रात् बुधात् इलायां पुरूरवाः जज्ञे। एकदा तस्य पुरूरवसः [2]रूपगुणादीन् श्रुत्वा अप्सराः उर्वशी स्मरशरपीडिता सती तत्समीपमाजगाम मित्रावरुणयोः शापात् नरलोकतां प्राप्ता उर्वशी कन्दर्पमिव रूपिणं पुरूरवसं ज्ञात्वा धैर्यमालम्ब्य तत्समीपमुपतस्थे। सः नृपतिः देवीं तां विलोक्य हर्षोत्फुल्ललोचनस्सन् उवाच हे वरारोहे! स्वागतं ते। आस्यताम्। किं करवाम? मया सह संरमस्व। आवयोः रतिः शाश्वतीस्समाः अस्तु। इत्येवमुक्तं तं प्रति उर्वशी आह हे सुन्दर त्वयि कस्याः स्त्रियाः

---

[1] पद्मपुराणम् - सृष्टिखण्डः-भाग-१ अध्यायः-१२ — श्लोकाः ६०-८७ प्र॥ जयचामराजेन्द्रग्रन्थमाला संख्या-१६ कन्नडानुवादः—बेलदकेरे सूर्यनारायणशास्त्री, मैसूरु-1945. O.R.I. Book No. K-5263. पुटसंख्या 292-295)

[2] रूपं, सौन्दर्यम्, औदार्यम्, वदान्यता, शीलं, सुखभावः, सद्वृत्तिः, द्रविणं, धनं, विक्रमः, पराक्रमः, इत्यादीन् रूपगुणादीन्.

मनः दृष्टिश्च न सज्जेत । तवाङ्गान्तरं वक्षः दृष्ट्वा रन्तुमिच्छया सर्वं च्यवते । यदि मत्संमानमिच्छसि तदा मदुक्तमङ्गीकुरु—"एतौ द्वौ मेषौ मया पुत्रतया पालितौ, त्वदन्तिके निहितौ । त्वं रक्षस्व । घृतमेव मम भक्ष्यं स्यात् । मैथुनादन्यत्र काले त्वां नग्नं नेक्षिष्ये । यदा त्वं मैथुनादन्यत्र आत्मानं नग्नं दर्शयिष्यसि तदैवाहं गमिष्यामीत्युवाच । तदङ्गसङ्गाभिलाषी पुरूरवाः तस्याः भाषाबन्धनं तथास्त्विति अङ्गीचकार । ततस्सः तया सह यथेष्टं रेमे । कदाचिदुर्वशीमपश्यन्निन्द्रः तया विना ममास्थानं नातीव शोभते इति मन्यमानः तामानेतुं गन्धर्वान् प्रेरयामास । ते गन्धर्वाः मध्यरात्रे अन्धकारे संप्राप्ते सति आगत्य पुरूरवसि जायया उर्वश्या निक्षेपतया स्थापितौ मेषौ जह्रुः । तदा तैः नीयमानयोः पुत्रवत्पालितयोः मेषयोः रोदनं निशम्य उर्वशी "नपुंसकेन वृथैव आत्मानं वीरं मन्यमानेन नाथेन हताऽस्मि । अस्य विस्रंभात् अहं नष्टा । दस्युभिः अपत्ये हृतेऽभूताम् । अयं च नारीवत् भीतस्सन् शेते । दिवा तु पुरुषवद्व्यवहरति " इत्युवाच । एवंभूतैः वाग्रूपैस्सायकैः विद्धः पुरूरवाः खड्गमादाय रुषा नग्न एव निशि गन्धर्वाननुजगाम । तदा ते गन्धर्वाः उरणौ तत्रैव विसृज्य स्वविद्युता प्रद्योतन्त । तदा सा उर्वशी मेषावादायायान्तं पतिं पुरूरवसं नग्नं ददर्श । ततश्च सा भाषाभङ्गात् निर्जगाम । ततः ऐलः पुरूरवाः शयने जायामुर्वशीमपश्यन् विमना जातः । ततश्च तस्याः विरहेण विक्लवः उन्मत्तवन्महीं बभ्राम । एवं पृथ्वीं पर्यटन् स पुरूरवाः कुरुक्षेत्रे सरस्वतीतीरे पञ्चभिस्सखीभिः स्थितां प्रहृष्टवदनाम् उर्वशीं दृष्ट्वा वेदप्रसिद्धसूक्तार्थभूतं वचनं प्राह । हे जाये अद्याप्यनिर्वृत्य मत्कृतां निर्वृतिमनवाप्य घोरे विरहदुःखे त्यक्तुं त्वं नार्हसि । अतस्तिष्ठ तिष्ठ । मिथस्संल्लापान् करवावहै । हे देवि त्वया दूरं हृतः मदीयः कमनीयो देहः अस्मिन्नेव स्थाने पतति । अत्र पतितं

देहं वृकाः गृध्राश्च खादन्ति इति। एवमुक्ता उर्वशी तमाह। न म्रियस्व। त्वं पुरुषोऽसि। धैर्यमावह। इमे इन्द्रियरूपाः वृकाः त्वां मा स्म अद्युः। स्त्रीणां क्वापि सख्यं नैवास्ति। वृकाणां हृदयं यथा क्रूरं तथैव स्त्रीणां हृदयमपि। स्त्रियो हि अकरुणाः क्रूराः दुर्मर्षाः प्रियसाहसाः सत्यः अल्पार्थेऽपि विश्रब्धं पतिं भ्रातरं वा घ्नन्ति। अन्यान् घ्नन्तीति किमुत वक्तव्यम्। किञ्च अज्ञेषु अतीव विश्रम्भं विधाय त्यक्तसौहृदाः नवं नवमभीप्सन्त्यः पुंश्चल्यः स्वैरवृत्तयः भवन्ति। अतः मत्सख्यं त्यज। हे भर्तः भवान् संवत्सरान्ते एकस्यां रात्र्यां मया सह वसतु। तथा सति अपराण्यपत्यानि नौ भविष्यन्तीति। तद्वचनात् तां देवीमन्तर्वत्नीमुपालक्ष्य स पुरूरवाः स्वां पुरीं ययौ। ततः पुनः संवत्सरान्ते सः गतस्सन् पुत्रेणागतामुर्वशीमुपलभ्य मुदा युक्तः तया सह तां निशां सम्यगुवास। अथ निशावसाने स्वविरहेण व्याकुलमत एव दीनं पुरूरवसमुर्वशी प्राह स्म। त्वमिमान् गन्धर्वान् स्तुत्यादिना प्रीतान् कुरु ते च तुभ्यं मां दास्यन्तीति। सः तथैवाकरोत्। संस्तुवतः तस्य तुष्टाः गन्धर्वाः तस्मै अनेन अग्निना उर्वशीलोकप्राप्तिसाधनं कर्म कृत्वा ततः उर्वशीं प्राप्स्यतीति अभिप्रायेण अग्निस्थालीं पात्रविशेषं ददुः। ततस्सः कामान्धतया तां स्थालीमेव उर्वशीं मन्यमानः तया सहितः वने विचरन् संगमसमये नेयमुर्वशी किन्तु अग्निस्थालीत्यबुध्यत। ततश्च तां स्थालीं वने एव न्यस्य गृहे गत्वा निशि नित्यं तामेव ध्यायतः तस्य मनसि त्रेतायां संप्रवृत्तायां त्रयी अर्थात् कर्मबोधकं वेदत्रयं प्रादुरभूत्। सः स्थालीस्थापनस्थलं गतस्सन् शम्या गर्भे जातमश्वत्थं विलक्ष्य अस्मिन्नग्निरस्तीति च ज्ञात्वा तेनाश्वत्थेन द्वे अरणी कृत्वा उर्वशीलोकप्राप्तिकाम्यया अधरारणिमुर्वशीं ध्यायन् उत्तरामरणिं चात्मानं ध्यायन् उभयोर्मध्ये यत्काष्ठं तत्प्रजननं ध्यायन् पुरूरवाः 'उर्वश्यामुरसि पुरूरवा' इति मन्त्रतः अग्निं ममन्थ। तेन

जातवेदाः अग्निर्जातः। स च त्रय्या विद्यया विहितेन आधानसंस्कारेण त्रिवृदाहवनीयादिरूपः सन् राज्ञा पुरूरवसा पुत्रत्वे कल्पितः। तेन विभावसुना यज्ञफलदं सर्वदेवताशरीरकम् आश्रितार्तिहरं भगवन्तमधोक्षजं उर्वशीलोकं कामयमानः राजा आराधितवान्। पुरा कृतयुगे जनाः सत्वप्रधानाः भगवद्ध्याननिष्ठाः आसन्। तदा सर्वासां वाचां बीजभूतः प्रणवः एक एव वेद आसीत्। तथा देवोऽपि नारायणः एक एव आसीत् नान्यः। अग्निश्च एको लौकिक एव। वर्णश्च एको हंसाख्य एव आसीत्। रजः-प्रधाने तु त्रेतायुगे वेदादिविभागेन पुरूरवसः सकाशादेव कर्ममार्गः प्रकटो बभूव। ततो राजा पुरूरवाः परलोकसाधनभूतेन पुत्रतयाङ्गीकृतेन प्रजया अग्निना गन्धर्वलोकमेयिवान्॥ ऐलस्य चोर्वशीगर्भात् आयुः श्रुतायुः सत्ययुः रयः विजयः जयः इति षडात्मजा आसन्निति [1]भागवतोक्तकथा।

(v) महाभारतस्थकथा—

पुरूरवास्ततो विद्वान् इलायां समपद्यत।
सा वै तस्याभवन् माता पिता चेति हि नः श्रुतम्॥

त्रयोदशसमुद्रस्य द्वीपानश्नन् पुरूरवाः।
अमानुषैः वृतः सत्वैः मानुषः सन् महायशाः॥

विप्रैः सः विग्रहं चक्रे वीर्योन्मत्तः पुरूरवाः।
जहार च स विप्राणां रत्नान्युत्क्रोशतामपि॥

सनत्कुमारस्तं राजन् ब्रह्मलोकादुपेत्य ह।
अनुदर्शयां ततश्चक्रे प्रत्यगृह्णान्न चाप्यसौ॥

ततो महर्षिभिः क्रुद्धैः शप्तः सद्यो व्यनश्यत।

---

[1] श्रीमद्भागवतम्— नवमस्कन्धः—चतुर्दशोऽध्यायः-१५-४९ श्लोकाः, तथा पञ्चदशोऽध्याये प्रथमः श्लोकः)

लोभान्वितो मदवशात् नष्टसंज्ञो न धिरः ।
स हि गन्धर्वलोकस्थः उर्वश्या सहितो विराट् ॥
आनिनाय क्रियार्थेऽग्नीन् यथावद्विहितांस्त्रिधा ।
षट्पुत्रा जज्ञिरेऽथैलादायुर्धीमानमावसुः ।
दृढायुश्च वनायुश्च श्रुतायुश्चोर्वशीसुताः[1]॥ इति ॥

(vi) उर्वशीपुरूरवसोः कथा शतपथब्राह्मणेऽपि वर्तते । तत्रापि भागवतोक्तकथावदेव कथाऽस्ति । उर्वशी भाषावत्त्रयेण राजानं पतिं स्वीकरोति । तेषु शपथेषु सः मैथुनादन्यत्र नग्नमात्मानं न दर्शयेदित्यप्येकं शपथमासीत् । गन्धर्वाणां कुटिलतन्त्रेण उर्वशी नग्नं राजानं पश्यति । तदा सा तिरोभवति । राजा उन्मत्तस्सन् सर्वत्र अटति । एकदा एकस्य सरसः समीपं तां सखीभिस्सह दृष्ट्वा तया सह संलपति । इदं संभाषणं अत्र ब्राह्मणे वर्तते । अन्ते तयोस्समागमः अभूद्वा न वेति न ज्ञायते ।

(शतपथब्राह्मणम्—११–५–१)

(vii) अनयोः कथा बोधायनश्रौतसूत्रे, सर्वानुक्रमणिकायां च वर्तते । कालिदासस्य विक्रमोर्वशीयनाटकस्य कथायाः मूलमेतदेवागतमिति ज्ञायते ।

(viii) उर्वशीकथा पुराणादिषु विद्यते ।

इयमुर्वशी एका अप्सराः । नरनारायणौ बदरिकाश्रमे तपःकरण-वेलायां इन्द्रेण प्रेरिताः काश्चन देवविलासिन्यः तयोः तपोभङ्गार्थं तत्रागताः । तदा नारायणः स्वीयमूरुप्रदेशमास्फालयामास । ततः लोकोत्तरा एका

[1] महाभारते आदिपर्वणि-संभवपर्वणि ययात्युपाख्याने-७० तमेऽध्याये १६–२२ श्लोकाः ।

लावण्यवती तरुणी जनितव्रती। सैव उर्वशी। तस्याः लावण्यातिशयं दृष्ट्वा देवविलासिन्यः लज्जया निर्गच्छन् इति देवीभागवतकथा।

(दे.भा. ४-६, १-१३)

मित्रनामकसूर्यस्य शापात् पुरूरवसा सह भुवि उवास इति रामायणे (वा. रा. उत्तरकाण्डे—५६ अध्यायः) पद्मपुराणे च (प.पु. ५–२२) कथाऽस्ति।

एवम् उर्वशीपुरूरवसोः कथा वेदपुराणादिषु प्रसिद्धाऽस्ति। तामेव कथामनुसृत्य अयं च वेङ्कामात्यः उर्वशीसार्वभौमेहामृगं रचयामासेति ज्ञायते।

उर्वशीसार्वभौमेहामृगस्य कथा—

राजा पुरूरवाः इन्द्रसखा। एकदा सः देवलोकं जगाम। देवेन्द्रसभायां देवाप्सराः उर्वशी ननर्त। तस्याः अपूर्वं रूपसौन्दर्यं दृष्ट्वा तस्यां प्रीतिः समजनि। साप्युर्वशी राज्ञः अनुपमं रूपसौन्दर्यं गुणं च ज्ञात्वा तस्मिन् राज्ञि अनुरक्ता बभूव। परम् उभावपि स्वीयमभिलाषं रहस्येव न्यधाताम्। परं देवेन्द्रोऽपि उर्वश्यामनुरक्तस्सन् तस्याः देहसङ्गार्थमागच्छति। उर्वशी सख्या सह राज्ञः विषयमेव कथयन्ती वर्तते। तयोस्संभाषणं रहसि इन्द्रः शृणोति। परं सा मां प्रत्येव वदतीति इन्द्रः मनुते। सा मय्यनुरक्ता वर्तते इति चेत् मदीयं भाग्यमित्येव जानाति। संभाषणान्ते सा राजानमभिलषतीतिं ज्ञात्वा क्रुद्धो भवति। चित्ररथः तं निवार्य उपायमेकं सूचयति। राजवेषेण उर्वशीं सङ्गच्छतु भवानिति चित्ररथवचनानुसारात् पुरूरवसः वेषं धृत्वा उर्वशीसमीपं गच्छति। तं दृष्ट्वा राजैवागत इति उर्वशी लज्जिता भवति। तस्याः सखी तमुपचरितुं गच्छति। किन्तु सैव करोत्विति राजा सूचयति। तदनुसारात् तमुपचरितुं सन्नद्धा भवति उर्वशी। एतस्मिन् समये एव राजा पुरूरवाः तत्रागच्छति। उभौ पुरूरवसौ दृष्ट्वा उर्वशी किमपि कर्तुमजानन्ती तिष्ठति। राजा स्वीयवेषधारिणं महेन्द्रं उर्वशीमपहर्तुं

स्वकीयं वेषं धृत्वा आगतं राक्षसमिति मत्वा तं हन्तुमुद्युक्तः। राजवेषधारी इन्द्रोऽपि राजानं हन्तुं झटिति गच्छति। एतस्मिन्नन्तरे नारायणमुनेराज्ञां स्वीकृत्य आगतः कश्चन तापसः अयं राजा पुरूरवाः अयं च राजवेषधारी इन्द्रः इति उभयोः निजस्वरूपं उर्वशीं सखीं च कथयति। तदा उर्वशी व्याकुला भीता च भवति। इन्द्रः राजवेषमपहाय स्वीयरूपेणैव राज्ञा पुरूरवसा सह योद्धुं प्रक्रमते। भंकरं तुमुलं प्रचलति। एतस्मिन्नेव समये उभयोर्मध्ये नारदमुनिरागत्य —उर्वशी सर्वसाधारणस्त्री। तस्याः कृते उभयोर्युद्धं न समीचीनम्। सा यमिच्छति तस्यैव पत्नी सा भवति। इयं नारायणमुनेराज्ञा इति कथयति। उर्वशी राजानमेव वृणुते। इन्द्रः तस्य सेना च स्वर्गं गच्छति। उर्वशीपुरूरवसौ नारदमुनिं नमस्कुरुतः। गुणसंपन्नम् आत्मजं लभस्वेति राजानमनुगृह्णाति मुनिः। इयं च कथा अत्र ईहामृगे सुनिबद्धाऽस्ति।

## ग्रन्थकर्तुः परिचयः

अस्य उर्वशीसार्वभौमेहामृगस्य कर्ता वेङ्कामात्यः। वेङ्कयार्यः वेङ्कप्पय्यः इत्यादीनि नामान्तराण्यस्य सन्ति। अस्य कुलं मौनभार्गवकुलम्। द्विजोऽयं हम्पय्यनामकमन्त्रिणः तनयः। वाबाम्बिका एतस्य जननी। रामपुरः अस्य जन्मभूमिः। संस्कृतकर्णाटकान्ध्रभाषासु अनेकाः कृतयः अनेन सुनिबद्धाः। अन्तस्साक्ष्यबर्हिस्साक्ष्यादिभिरेव एते सर्वे विषयाः ज्ञायन्ते। तद्यथा—

i) वीरराघवव्यायोगस्य[1] प्रथमाङ्के—

'यस्य कविर्हि वाबाम्बिकागर्भकलशजलधिपूर्णचन्द्रः।
निरवधिकदीनानुकम्पी हम्पार्यतपोरूपो वेङ्कामात्यशिरोमणिः॥

---

[1] Mss. No. B. 192 Mss. B. 360
Mss. P. 2586, O.R.I. Mysore.

योऽसौ कामविलाससत्कृतिकृती कर्णाटरामायण-

प्रौढग्रन्थविधायकः समकरोत् काव्यं हनूमज्जयम् ।

चम्पूं कौशलवीं महेन्द्रविजयं श्रीमच्चिदद्वैतिकां

तत्कुक्षिंभरिसंयमिप्रहसनं श्रीमान् स वेङ्कप्रभुः ॥ किं च

ध्यानेनेन्द्रियसंरोधान्मौनभार्गवतां ययौ ।

यस्तद्वंशेऽजनिष्टाऽसौ फलत्येव हि यत्कृतम् ॥

ii) [1]रुक्मिणीमाधवाङ्कस्य प्रस्तावनायाम्—

यः श्रीमानखिलेष्टदानविभवो यस्माच्चिदद्वैतकं

जातं कामविलासराघववरव्यायोगकर्ता च यः ।

यल्लीलारचितो महेन्द्रविजयो योऽसौ हनूमज्जय-

प्रादुर्भावखनिर्यतो विरचितं कर्णाटरामायणम् ॥

नटी—णादं णादं (ज्ञातम्, ज्ञातम्)

(संस्कृतमाश्रित्य)

योऽसौ वाबाम्बिकागर्भशुक्तिमुक्तामणिप्रथः ।

यं हम्पयार्यवंशाब्धिकौस्तुभं विबुधा विदुः ॥ इति

---

[1] Mss. No. p. 2586/8, Mss. No. p. 2773/5
M ss. No. 193/7, Mss. No. 360/4
O.R.I. Mysore.

iii) [1]सीताकल्याणवीथीप्रस्तावनायाम्—

सूत्रधारः— यज्जगद्विख्यातबिरुदाङ्कमपि वेङ्कामात्यम् अधुना ज्ञातव्य-
माकलयति—

यं च वाबाम्बिकाहम्षसुधीमुक्तमूर्जितम् ।
वदन्ति विबुधाभूयस्सभासु रसवेदिनाम् ॥

नटी—आर्य ! सविशेषं प्रत्यभिज्ञा जाता । एष एव खलु कर्णाटक-
रामायणसीतापरिणयादिप्रबन्धनिर्वहणसाहस इति तत्र तत्र
गीयते—

सूत्रधारः—कश्शक्तः तत्प्रबन्धसंख्याकरणेऽपि संख्यावताम्—

योऽसौ कामविलासभाणजनितक्ष्घसाच्चिदद्वैतकं
जातं-कौशलवीति काऽपि समभूच्चम्पूर्हनूमज्जयम् ।
काव्यं यत्प्रभवं वदन्ति कृतिनो येनोदितं राघव-
व्यायोगं च डिमो महेन्द्रविजयो यन्निर्मितो राजते ॥ इति

iv) [2]महेन्द्रविजयडिमप्रस्तावनायाम्—

मारिषः—(स्मरणमभिनीय)

---

[1] Mss. No. p. 2773/4, Mss. No. p. 2586/3
Mss. No. B. 192/6, O.R.I. Mysore.

[2] Mss. No. B. 192, Mss. No. p. 2773
O.R.I. Mysore.

ज्ञातम् । यस्य खलु निरर्गळानन्दरसप्रापकस्यापि रूपकस्य कवयिता नवनवोन्मेषसुषमाविशेषभूषणः प्रगल्भजनजेगीयमानमधुरमधुरसधोरणीबन्धुर-प्रबन्धनिर्वाहसाहसनिरातङ्कः श्रीवेङ्कामात्यनामा सुधीमणिः ।

सूत्रधारः—अथ किम्

कर्णाटरामायणकाव्यकर्ता
कविश्चिदद्वैतकृतेर्महान्यः ।
जगौ हनूमज्जयमाञ्जनेय-
शताभिधं कामविलासभाणम् ॥ अपि च

कुशलवचम्पूजनिकृत् कुक्षिम्भरभिक्षुप्रहसनाढ्यः ।
सीतापरिणयघटनाख्यातः षड्दर्शिनीनेता ॥ अपि च—

यश्च वामाम्बिकागर्भशुक्तिमुक्तामणिप्रथः ।
यं हम्पयार्यदुग्धाब्धिबन्धुमिदं प्रचक्षते ॥

v) अनेनैव कृते [1] 'जगन्नाथविजयमहाकाव्ये' प्रतिसर्गं समाप्तिवाक्ये एवं कथितमस्ति । तद्यथा—'इति श्रीमद्रामपुराधीशश्रीरघुनाथचरण-द्वन्द्वाराधनलब्धसम्पत्सारस्वतवैभवविश्वजनीनविद्यश्रीवेङ्कयार्यप्रधान—शिरोमणिविरचिते श्रीमति महाकाव्ये जगन्नाथविजये ....इति

vi) अस्मिन्नेव [2] उर्वशीसार्वभौमेहामृगे प्रस्तावनायाम्—

नटी—णादं णादं ।

---

[1] Mss. No. B, 2020, O.R.I., Mysore.

[2] Mss. No. p. 2586, Mss. No. p. 2773 O.R.I., Mysore.

जंस कइ कणाडरामाअणादिमहापबन्द-

णिंमाणणिवुणो वेङ्कअंजोंति गिंजदि ॥

सूत्रधारः—साधु स्मृतं भवत्या ।

कथं गीर्वाणकर्णाटकान्ध्राद्यनेकभाषाकवयितुः प्रबन्धगणनावकाशस्तस्य—

'योऽसौ कामविलासभाणतिलको यद्वा चिदद्वैतकं

शास्त्रं यश्च डिमो महेन्द्रविजयो यो रुक्मिणीमाधवः ।

अङ्कः किञ्च यदाञ्जनेयशतकं काव्यं हनूमज्जयं

यत्कुक्षिभरभैक्षवं प्रहसनं तत्सर्वमेतत्कृतम् ॥ इति

एवं च एतैः प्रमाणैः अयं विषयः निश्चितो भवति । अयं च वेङ्कामात्यः संस्कृतकर्णाटकान्ध्रभाषासु प्रसिद्धः कविरासीत् । संस्कृतभाषायां नाटक-प्रकरणरूपरूपकद्वयं विहाय शेषेषु भाणाद्यष्टप्रभेदेषु ग्रन्थाः अनेन सुनिबद्धाः । ते च—

I. रूपकप्रभेदाः—

i) 'कामविलासभाणः'
ii) 'कुक्षिभरिभैक्षवप्रहसनम्'
iii) 'महेन्द्रविजयडिमः'
iv) 'वीरराघवव्यायोगः'
v) 'लक्ष्मीस्वयंवरसमवकारः'
vi) 'सीताकल्याणवीथी'
vii) 'रुक्मिणीमाधवाङ्कः'
viii) 'उर्वशीसार्वभौमेहामृगः'

II. संस्कृतभाषायां रचिताः अन्ये ग्रन्थाः—

i) 'जगन्नाथविजयम्—(महाकाव्यम्)

ii) 'कुशलवचम्पूः'—(चम्पूकाव्यम्)

iii) 'चिदद्वैतिका'—(अद्वैतपरो ग्रन्थः)

iv) 'आञ्जनेयशतकम्'—(स्तोत्रकाव्यम्)

v) 'अलङ्कारमणिदर्पणम्'—(अलङ्कारशास्त्रग्रन्थः)

vi) 'सुधाझरी'—(गद्यकाव्यम्)

अनेन न केवलं संस्कृतभाषायां, कर्णाटकभाषायामपि कृतयः विरचिताः इति ज्ञायते । 'सीताविवाहः' 'हनुमज्जयम्' 'कर्णाटक रामायणम्' इति कृतयः कर्णाटकभाषायां वर्तन्ते । तदुक्तम् अस्यैव 'कामविलासभाणप्रस्तावनायाम्'—

'यः श्रीरामपदारविन्दविहरद्भृङ्गायमाणामल—
स्वान्तश्रीपवनात्मजप्रसदनस्वाधीननानाकलः ।
येनाकारि कवीन्द्रनन्दितरसं सीताविवाहाभिधं
काव्यं श्रीहनुमज्जयेन च समं कर्णाटरामायणम् इति ।

अस्य कुलगोत्रादिविषयेऽपि तत्रैव कामविलासभाणेऽपि एवं निरूपितमस्ति—

विश्वानन्दिनि मौनभार्गवकुले दुग्धाम्बुधिप्रोज्वले
हम्पार्याभिधमन्त्रिणः समुदितो वाबाम्बिकागर्भजः ।
आजन्मप्रथमानविलसत्सौशील्यसाम्राज्यभूः
वेङ्कप्पप्रभुरुन्नतो गुणगणैस्सोऽयं न केन श्रुतः ॥ इति

अयं आन्ध्रभाषायामपि कविरासीदिति 'कथं गीर्वाणकर्णाट-कान्ध्राद्यनेकभाषाकवयितुः प्रबन्धगणनावकाशस्तस्य' इति उर्वशीसार्वभौमेहा-मृगस्य प्रस्तावनावाक्यादवगम्यते । परं ग्रन्थाः अद्यावधि नोपलब्धाः ।

वेङ्कामात्यः श्रीरामस्य अनन्यः भक्तः आसीत्। एवमेव रामभक्तस्य हनूमतः पादसेवकोऽप्यासीत्। रामहनुमतोरनुग्रहेणैव कृतिरचनासामर्थ्यं लब्धवानिति तस्य ग्रन्थवाक्यैरेव ज्ञायते। तद्यथा—

i) सीताकल्याणवीथीप्रस्तावनायाम् —

अ) 'यः श्रीरामपुराधिनाथकरुणादैनन्दिनोज्जृम्भण-
प्राप्ताधीशदशश्चतुर्दशकलासाहित्यसाम्राज्यभूः।
यस्येयं दशरूपकप्रभवकृत् प्रज्ञारसज्ञादृता
यश्चौदार्यमुखानधत्त सुगुणानाचूलिकासम्भवात्॥

आ) नटी—(सानुसरणम्) आर्य एतस्य अञ्जनानन्दनप्रसादलब्ध एव कवितविलास इति श्रूयते।

सूत्रधारः—कस्सन्देहोऽत्र।
पवनात्मभवस्मृतिर्वचा नवनीतं रघुनाथसेवनम्।
शिशुतासमयेऽपि साहिती पयसस्तौल्यमवाप यत्कवेः॥ इति

ii) वीरराघवव्यायोगप्रस्तावनायाम्—

सूत्रधारः—आर्ये, किमलभ्यमाञ्जनेयद्वितीयावतारस्य तस्य? यदुच्यते पुराविद्भिः बुद्धिबलयशोधैर्यादिकमपि तत्सेवकानां तन्महिम्नैव लभ्यते इति।

एवमेतैः प्रमाणैः एषः श्रीरामस्य—आञ्जनेयस्य च अनन्यभक्तः इत्यवगम्यते। अत एव श्रीरामपरत्वेन हनुमत्परत्वेन च मङ्गलपद्यं कृतवानस्ति ग्रन्थकृदयम्। उदाहरणार्थमुच्यते—

i) सीताकल्याणवीथीमङ्गलपद्यद्वयमिदम्—

पातु श्रीरामचन्द्रः प्रणतजनततिप्रौढसम्पत्प्रदानः
प्राचुर्यौदार्यचर्यः प्रकटितसुरभूजातविख्यातसान्द्रः ।
यस्मिन् शृङ्गारलीलाकलिततनुलताभासमाने समाने
वश्या सीताभिधाना विनिहितहृदया प्राप सौख्यानि लक्ष्मीः ॥

वीरश्रीकुचकुङ्कुमाङ्कितमिव प्रायोऽरुणं यद्वपुः
सूराहारकलापि यद्विलसितस्थालीपुलाकायते ।
सीतानाथसनाथमञ्जुलहृदश्चिन्ताभिदस्तस्य नः
चेतः प्रीतिमुपैतु सेवनविधौ शाखामृगब्रह्मणः ॥

ii) वीरराघवव्यायोगस्य मङ्गलपद्यद्वयम्—

श्रेयः श्रीरघुनन्दनो वितरतादस्मै शि योऽसौ बलात्
आदायेव समं परश्वधभृतश्चापेन रूपं मुनेः ।
लोकानामवनाय संभृततपोवेषो वधे रक्षसा-
मातेने खरदूषणादिकवधप्रस्तावनां नाटके ॥

भिन्दन् प्रासादकोटीभिदुरनखमुखैः पाणिजाग्रन्नखाग्रैः
भिन्दन्नुद्यानवाटीतरुवरविटपानद्भुतोदन्तदन्तैः ।
हुंकारेणैव रक्षस्समुदयममितः त्रासयन् वीततन्द्रो
लङ्कातङ्कोपदेष्टा स जयति कबलत्पङ्कजाक्षः कपीन्द्रः ॥

इत्थमेव सर्वत्र कृतिषु मङ्गलपद्येषु रामं हनुमन्तं च भक्त्या स्तौति ।

## ग्रन्थकर्तुः देशकालादिविषयः

कर्णाटकराज्ये मैसूरुनगरं बहोः कालात् प्रथितमस्ति । तत्र अनेके यदुवंशराजानः राज्यभारं चक्रुः । इतिहासे मैसूरुनगरस्यापि एकं विशिष्टं स्थानमस्ति । श्री इम्मडिकृष्णराजओडेयर् (क्रि श. १७३४-१७६६ श्री नञ्जराजओडेयर् (क्रि. श. १७६६–१७७०), श्री बेट्टद्चामराज-ओडेयर् (१७७०-१७७६) इत्येते राजानः मैसूरुसंस्थानस्य राजानः आसन् । एतस्मिन् समये अयं वेङ्कामात्यः मन्त्री आसीत् । हैदरालि-सन्निधेऽपि (क्रि. श. १७६३-१७८०) एषः प्रधानमन्त्री अभवत् । अतीव धीमानसौ न केवलं राजकार्येषु कुशलः परं काव्यनिर्माणेऽपि चतुरः आसीत् । संस्कृत-कन्नड आन्ध्रभाषासु प्रसिद्धः विद्वानयं अनेकाः कृतीः* रचयामासेति ज्ञायते । सङ्गीते चित्रकलायां च अतीवासक्तिरस्येत्यपि अवगम्यते ।

क्रिस्तशक अष्टादशशताब्द्या मैसूरुसंस्थानस्य इतिहासे वेङ्कप्पय्यस्य पात्रं विशिष्टतमम् । अस्य जन्मस्थानं 'रामपुरम्' इति कश्चन ग्रामः ।

---

* Like Vatsaraja, Pradhani Venkatabhupathi of Mysore wrote plays of different species, Rukminisvayamvara (anka), Kukshimbharabhaikhsava (prahasana), Kamakalavilasa (bhana), Urvasisarvabhouma (Ihamruga), Vibudhadanava (Samavakara) Viraraghavavijaya (vyayoga), Sitakalyana (vithi), and on Poetics Alankaramanidarpana.

(History of classical Sanskrit literature. by M. Krishnamachari page 705)

अस्य ग्रामस्य नाम तस्य सर्वासु कृतिषु उद्धृतमस्ति। मैसूरनगरस्य समीपे नैऋत्यभागे चट्टनहल्लिनामकग्रामः कपिलानद्याः तीरे वर्तते। तस्य ग्रामस्य समीपे गमगुरग्रामः विद्यते।

वेङ्कप्पय्यः अतीवक्लिष्टपरिस्थितौ जीवितवान् इति ज्ञायते। तस्य सांसारिकसन्निवेशाः न सुखदायिनः आसन्। राजसौधस्य परिस्थितिः परिपूर्णतया षड्यन्त्रव्यूहे अवर्तत। राजानः न बलिष्ठाः। अधिकारः एकस्यापि हस्ते न स्थिरः अभवत्। तत्समये कळलेनञ्जराजः अतीव प्रभावशाली पुरुषः। स तावत् द्वितीयकृष्णराजप्रभोः श्वशुरः। नञ्जराजः चतुरः शासकः इति प्रथितः। तत्काले स सर्वाधिकारी नञ्जराजः इत्येव प्रसिद्धः। वस्तुतः सः धनसचिवालये करसचिवालये च अधिकारी। अथापि सः अन्येषु विभागेष्वपि स्वीयप्रभावं विस्तारयति स्म। सैन्यं स्वीयमुष्टौ स्वीकर्तुं प्रायतत। तन्न सिद्धम्। यतः सर्वं सैन्यं हैदरालिवशे आसीत्। सेनाविभागे हैदरालिः अतीव प्रभावशाली व्यक्तिरभवत्। अयं हैदरालिः शीघ्रातिशीघ्रं स्वीयप्रभावं वर्धयित्वा नञ्जराजं तस्य स्थानात् प्रच्यावयितुं समर्थो बभूव।

मैसूरुसंस्थानस्योपरि अन्येषां संस्थानानाम् आक्रमणादिकं वर्तत एव आसीत्। महाराष्ट्रीयाः अस्योपरि आक्रमणं कुर्वन्तः आसन्। एतस्मिन् समये वेङ्कप्पय्यः मैसूरुसंस्थानस्य परतः प्रविश्य तान् सर्वान् स्थगयितुं समर्थोऽभवत्।

वेङ्कप्पय्यः प्रथमतः मैसूरुराज्ञां प्रीतिं संपादयितुं प्रायतत। अस्य राजकीयप्रवेशकाले कळलेनञ्जराजः, हैदरालिश्च द्वावपि प्रभावशालिनावास्ताम्।

द्वितीयः कृष्णराजओडेयर् भूपतिः क्रि. श. १७३४ तमे वर्षे यदा राज्यस्य सिंहासनमारुरोह तदा वेङ्कप्पय्यः 'प्रधान' इति स्थाने निर्देशितोऽभूत्। षड्वर्षपर्यन्तं स्वीयबुद्धिमत्तया स्वशक्त्या च राज्य-शासने स्वीयाधिकारं प्रचालयामास। नञ्जराजः कृष्णभूपतिस्थानमेवाक्रमितुं सन्नद्धः। तत्समये वेङ्कप्पय्यः कृष्णराजनृपस्य पक्षमादृत्य साहाय्यं प्रादात्। परमेतत् वेङ्कार्यस्य साहाय्यं न चकार। यतः तत्काले हैदरालिः अत्यन्त-प्रभावशाली सेनानायकः। एवमेव तस्य स्थानं वेङ्कार्यस्य प्रधानस्थानादपि उन्नतमभवत्। यदा नञ्जराजओडोयर् सिंहासनमारुरोह तदा वेङ्कप्पय्यस्य स्थानं सुरक्षितमभूत्। सैनाविभागमेकं विहाय अन्येषु सर्वेषु विभागेषु अधिकारं निर्व्यूढवान्।

प्रथमतः वेङ्कप्पय्यः प्रधानीवेङ्कप्पय्यः इति प्रथितः अभवत्। यतः सः अमात्यकुलादेव जन्म लेभे। अस्य पिता हम्पेयामात्यः। अमात्यपदं तस्य वंशस्य नामेति ज्ञायते। तस्य पूर्वजाः विद्वांसो भूत्वापि राजकार्य-निरताः आसन् इति विशेषः। एषः अरुवेलिनियोगिब्राह्मणः। जन्मतः एव असौ धीमान्। राजकीयविषयेषु कुशली च। क्रि. श. १७५७ समये राज्ञीवीरम्माजी बिदनूरुनगरं शाससि स। तदा अयं वेङ्कामात्यः तस्याः समीपे राजप्रतिनिधिरूपेण सेवां प्रविवेश। कतिपयकालानन्तरम् अमुं वेङ्कामात्यं सा वीरम्माजी 'होसंगडिनगरं' प्रति प्रेषितवती। प्रदेशोऽय-मधुना दक्षिणकन्नडजिल्लाविभागे वर्तते।

तत्र बिदनूरुनगरे सप्तवर्षपर्यन्तमयं शासनमकरोत्। तस्य शासनसामर्थ्यं परिगण्य राज्ञी दिवानकार्यालये अमुं प्रति प्रधानः इति उन्नतां पदवीं प्रादात्। राजकार्येषु अस्य सेवा प्रथमतः राज्ञ्याः वीरम्मायाः समीपे एव अभवत्। अस्मिन् समये एवाऽसौ संस्कृतस्य कृतीनां रचनाकार्ये निरतः आसीत्।

शासनशौण्डं राजकार्यकुशलममुं दृष्ट्वा हैदरालिः आकर्षितस्सन् स्वीयं श्रीरङ्गपत्तनं प्रत्याहूय प्रधानपदवीं दत्वा संमानयामास। हैदरालेः प्रार्थनायाः कारणात् विदनूरुशासनकार्यमपि वेङ्कामात्यः स्वीचकार। एतत्समये राज्यस्य अभिवृद्ध्यर्थं प्रजानां रक्षणादिकार्यविषयेषु च संपूर्णं समयं विनियुज्य प्रजानां प्रीतिं संपादयामास। राज्यस्य अर्थार्जनविषये नूतनार्थ-व्यवस्थां प्रकल्प्य आर्थिकक्षेत्रं वर्धयामास। धनस्य अपव्ययादिकमपि दूरीचकार। राज्यस्य वाणिज्यव्यवस्थायामपि महत्त्वपूर्णं परिवर्तनमकरोत्। मैसूरुसंस्थाने तिम्मप्पः इति कश्चन राजप्रतिनिधिः अवर्तत। तेन धनस्य दुर्विनियोगः कृतः इतिससाक्षिकमन्विष्य राज्ञे न्यवेदयत्। एतेन तस्य नैजं सामार्थ्यं बहिः प्रकाशितम्।

अयं च सन्धिकार्यचतुरोऽपि। एतेन कारणेन क्रि.श १७७४ तमे वर्षे हैदरालिः मराठाधिपेन रघुनाथरावेण सार्धं सन्धिं समुत्पादयितुं पूनानगरं प्रति वेङ्कामात्यममुं प्रेषयामास। कार्यमिदमसौ सम्यक् साधितवान्। एवमेव क्रि. श. १७७० तमे वर्षे कर्णाटकराज्यस्य हासन-बेलूरु-तथान्येषां संस्थानानां पाळेगाराणां (दण्डनायकानां) दमनकार्यं सम्यक् साधयामास। क्रि. श. १७७१ तमे वर्षे कर्णाटकस्य मेलुकोटे समीपे मराठैस्सह नियुध्य नृपं टिप्पूं प्रति मैसूरुसंस्थानं यथावत् संपादयामासेत्यपि ज्ञायते।

वेङ्कामात्यः स्वीयजीवितस्य अन्तिमदिवसेषु सुखी नासीत्। दुःखी एवाऽभवत्। तानि दिनानि तु तस्य दुःखदायकानि। अयं वेङ्कामात्यः परमया निष्ठया हैदरालेः सेवां यद्यप्यकरोत् तथापि सः हैदरालिः पिशुनजनानां वचनमनुसृत्य अस्मिन् असन्तुष्टो बभूव। अधिकारसमये असौ धनादिविषये स्वाधिकारं दुर्विनियोगं चकारेति मिथ्यापवादं तदुपरि समारोप्य तं प्रधानसचिवस्थानात् निष्कास्य बन्धनागारं प्रेषयामास। परं तत्पश्चात् सः निरपराधी इति हैदरालिः अजानात्। सद्य एव तं बन्धनागारात्

मोचयामास । ततः केवलप्रधानबिरुदभाजे तस्मै सः हैदराल्लिः प्रतिमासं एकसहस्ररूप्यकपरिमितं वेतनं प्रदास्यन् ररक्ष । क्रि श. १७८३ तमे वर्षे वेङ्कामात्यः मधुमेहरोगेण पीडितस्सन् दिवंगतः ।

श्री सि. हयवदनरावेण विरचिते History of Mysore[1] इत्याख्ये पुस्तके, श्री एम् पि. एल्. शास्त्रिणा लिखिते Pradhana Venkappaiah—Poet and Play-wright[2] इत्यस्मिन् लेखने च श्रीवेङ्कामात्यस्योपरि बहवो विषयाः निरूपिताः । विशेषविषयाः तत्रैव द्रष्टव्याः । विषयप्रकाशनदृष्ट्या अनयोः ग्रन्थयोः उद्धृतः केचन ग्रन्थभागाः अस्य ग्रन्थस्य अनुबन्धभागे प्रदत्ताः ।

## वेङ्कामात्यस्य शैली

वेङ्कामात्यः अनेकेषु शास्त्रेषु निष्णातः आसीत् इति तस्य ग्रन्थावलोकनेन ज्ञायते । विशेषतः रूपकप्रबन्धेषु कथावस्तुसंविधाने पात्रचित्रणे,

---

1. History of Mysore, (1704-1766 A.D.) Volume-II
By C. Hayavadana Rao, Chapter—XIII
Krishnaraja Wodeyar —II
Printed at the Government Press,
Bangalore-1946
(Page Nos. From 476 to 482)

2. 'Pradhana Venkappaiah—Poet and Play write'
By M. P. L. Sastry, M.A.
Published in the Quarterly Journal
of the mythic Society vol. XXXI July 1940
Bangalore. (Pages 36 to 52)

वर्णनसन्दर्भे, अलङ्कारसङ्घटनायां, विविधेषु वृत्तेषु पद्यरचनायां च कुशलः इत्यवगम्यते । काव्यनिर्माणेऽपि सिद्धहस्तोऽयम् । लक्ष्मीस्वयंवरसमवकारस्य 'विबुधदानवसमवकारः, इति नामान्तरमप्यस्ति । 'सुधाझरी' गद्यग्रन्थः । अयं ग्रन्थः बाणस्य 'कादम्बरीं स्मारयति । 'अलङ्कारमणिदर्पणम्' इति ग्रन्थः अलङ्कारशास्त्रस्य लाक्षणिकग्रन्थः । काव्यसम्बन्धिनः अनेके विचाराः अत्र निरूपिताः । 'जगन्नाथविजयम्' एकं महाकाव्यम् । व्याकरणशास्त्रस्य अपूर्वशब्दानाम्, उदाहरणानां च प्रयोगाः अत्र विद्यन्ते । काव्यमिदं भट्टिकाव्यं ज्ञापयति । कर्णाटकभाषायां-कर्णाटकरामायण-इन्दिराभ्युदय-रामाभ्युदय-हनुमद्विलासनामकग्रन्थाः मनोज्ञाः सन्ति । संस्कृते 'हनुमच्छतकम्' 'सूर्यशतकम्' इत्युभौ स्तोत्रग्रन्थौ मनोहारिणौ स्तः । विशेषतः अस्य शैली सुलभा मधुरा गभीरा च । राजकार्यनिरतोऽप्ययं साहित्यक्षेत्रे ग्रन्थान् रचयामासेति चित्रं प्रशंसार्हं च कार्यम् ।

## संपादनसमये स्वीकृतयोः हस्तप्रत्योः परिचयः

अप्रकटितस्यास्य ईहामृगस्य संपादनसन्दर्भे द्वे हस्तप्रती अवलोकिते स्तः । उभे एव हस्तप्रती वर्तेते । उभेऽपि मैसूरुप्राच्यविद्यासंशोधनालये (Oriental Research Institute) लभ्येते । अन्यत्र यत्र कुत्रापि अस्य उर्वशीसार्वभौमेहामृगस्य हस्तप्रतयः नोपलभ्यन्ते । एते द्वे प्रती अवलोक्य ग्रन्थोऽयं सम्यक् संपादितः ।

# TABLE OF MANUSCRIPTS CONSULTED

| | | | |
|---|---|---|---|
| 1 | Manuscript Numbers | P. 2589 | P. 2773 |
| 2 | Meterial of the manuscripts | Palm leaf | Palm leaf |
| 3 | Script | Kannada | Grantha |
| 4 | S'ze in Cms. | 35 × 5.5 | 34.8 × 3.8 |
| 5 | Leaves of pages | 1—99 | 119—149 |
| 6 | Lines in a page | 7 | 7 |
| 7 | Letters in a line | 45 | 52 |
| 8 | Complete or Incomplete | Complete | Complete |
| 9 | Condition | Good | Good |
| 10 | Place | O.R.I. Mysore | O.R.I. Mysore |
| 11 | Symble of the manuscripts | Ka. (क) | Ga. (ग) |

## संपादनकार्यस्य विशेषता

'कन्नडलिपिस्थहस्तप्रतेः 'क' इति ग्रन्थलिपिस्थहस्तप्रतेः 'ग' इति च सङ्केतः अत्र संपादनकर्मणि व्यवहृतः। संस्कृतभाषायां मयैव नूतनतया 'ललिता' नामिका टिप्पणी विरचिताऽस्ति। पाठान्तरादिकं प्रत्येकं टिप्पण्याः अधोभागे प्रदत्तमस्ति। पद्यानां भावानुवादोऽपि टिप्पण्यां लिखितः। विशिष्टसन्दर्भे वेद-शास्त्र-पुराणादिग्रन्थावलोकनेन अभिप्रायः संगृहीतः संकलितश्च दियते।

## कृतज्ञतासमर्पणम्

ग्रन्थस्यास्य संपादनवेलायां-ग्रन्थप्रकटणमार्गे च स्मरणीयमुपकारं कृतवद्भ्यः निर्देशकेभ्यः डा. आर्. एस्. शिवगणेशमूर्तिमहोदयेभ्यः, उपनिर्देशकेभ्यः विद्वद्भ्यः रामाचार्यसाळगिमहाभागेभ्यः, प्राक्तननिर्देशकेभ्यः डा.के. राजगोपालाचार्यमहाशयेभ्यः, समुचितं साहाय्यं सहकारं च दत्तवद्भ्यः सहृदयेभ्यो सहोद्योगिभ्यः विद्वद्भ्यः श्री हेच. शङ्करगणपतिफाटकेभ्यः तथा विद्वद्भ्यः श्री एच्. वि. नागराजरावमहोदयेभ्यश्च मदीयाः कृतज्ञताः अर्पयामि। विश्वविद्यानिलयस्य मुद्रणालयविभागस्य चयस्यः श्री नरसिंगरावदेसायिमहाभागः ग्रन्थस्यास्य मुद्रणविषये बहूपकारं प्रादात्। तं प्रति कृतज्ञतां समर्पये। ग्रन्थमिमं सुन्दरं मुद्रितवद्भ्यां गुरुवर्यमुद्रणालयस्य श्रीमती शशिमूर्ति श्री टि. के. एल. मूर्तिमहाभागाभ्यां

कृतज्ञतां समर्पयामि । इदंप्रथमतया लोकं प्रति प्रकटितमिदं रूपकं सज्जनाः सहृदयाः विद्वांसः संस्कृतानुरागिणश्च सानुरागं स्वीकुर्वन्त्विति प्रार्थये ।

इति
सहृदयविधेयः
'प्रतिभापटुः' वेदसूक्तविद्यासागरः',
**टि. वि. सत्यनारायणः**
अलङ्कारव्याकरणशास्त्रविद्वान्,
संस्कृत एम्. ए., संस्कृतकोविदः
सहायकसंशोधकः, प्राच्यविद्यासंशोधनालयः,
मैसूरु



श्रीः

॥ शुभमस्तु ॥

श्रीवेङ्कामात्यविरचितः

# [1]उर्वशीसार्वभौमेहामृगः

(सम्पादककृतटिप्पण्या समलङ्कृतः)

**जयति पतिरखिलजगतां जलदद्युतिरेष दशमुखारातिः ।**
**वशमेत्य यस्य कीर्तिर्वासकसज्जेव जगदलश्चक्रे ॥ १ ॥**

---

टिप्पणी—(i) उर्वशीति । रूपकप्रभेदस्य नाम—'उर्वशीसार्वभौमेहामृगः' इति । उर्वशी अप्सरस्त्री । पुरूरवाः नाम राजा सार्वभौमशब्देन ग्राह्यः । 'उरून् महतोऽपि अश्नुते व्याप्नोति वशीकरोतीति यावत् । यद्वा उरुं नारायणस्य महर्षेः उरुप्रदेशमश्नुते योनित्वेन व्याप्नोतीति । उरु+अश्+क । गौरादित्वात् ङीष् । मनीषादित्वात् ह्रस्वादिः । इति शब्दकल्पद्रुमे व्युत्पत्तिः प्रदर्शिता । 'उरून् अश्नुते वशीकरोति इत्युर्वशी । उरु + अश् + क । गौरादित्वात् ङीष् । पृषोदरादित्वात् ह्रस्वः' इति वाचस्पत्ये ।

'उर्वशी च सार्वभौमश्च उर्वशीसार्वभौमौ । तयोः ईहामृगः उर्वशीसार्वभौमेहामृगः इति विग्रहः । उर्वशीसार्वभौमसम्बन्धी ईहामृगः इति फलितोऽर्थः ।

(ii) दशरूपकेषु ईहामृगः एकः प्रभेदः । तदुक्तं दशरूपके—

'नाटकं सप्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति ॥ (१-८)

---

[1] 'क' प्रतौ 'उर्वशीसार्वभौमाख्येहामृगः' इति, 'ग' प्रतौ 'उर्वशीसार्वभौमनामेहामृगः' इति च दृश्यते

मैसूरुविश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला – १७८

श्रीवेङ्कामात्यविरचितः

# उर्वशीसार्वभौमेहामृगः

सम्पादककृत 'ललिता' टिप्पण्या समलङ्कृतः

प्रधानसम्पादकः

विद्वान् डा. एम्. आर्. वीरभद्रस्वामी, एम्.ए. पि,हेच्.डि.
निर्देशकः, प्राच्यविद्यासंशोधनालयः
स्नातकोत्तरसंस्कृताध्ययनसंशोधनविभागस्य
प्रवाचकः मुख्यश्च
मानसगङ्गोत्री, मैसूरु

प्राच्यविद्यासंशोधनालयः, मैसूरु
१९९३

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE SERIES--178

# URVAŚĪ SĀRVABHOUMĒHĀMṚGAH

OF

## VEṄKĀMĀTYA

With 'Lalitha' Tippani of the Editor

*General Editor :*
Vidwan Dr. M. R. VEERABHADRASWAMY, M.A., Ph.D.
Director, Oriental Research Institute, Mysore and
Reader and Chairman,
Department of Studies in Sanskrit,
Manasagangotri, Mysore

ORIENTAL RESEARCH INSTITUTE
MYSORE—570005
1993

मैसूरुविश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला — १७८

श्रीवेङ्कामात्यविरचितः

# उर्वशीसार्वभौमेहामृगः

सम्पादककृत 'ललिता' टिप्पण्या समलङ्कृतः

सम्पादकः

'प्रतिभापटुः' 'वेदसूक्तविद्यासागरः'
विद्वान् टि. वि. सत्यनारायणः, एम्.ए.
अलङ्कारव्याकरणशास्त्रविद्वान्
संस्कृत एम्. ए. संस्कृतकोविदः
सहायकसंशोधकः—I
प्राच्यविद्यासंशोधनालयः, मैसूरु

प्राच्यविद्यासंशोधनालयः, सूमैरु
१९९३

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE SERIES-178

# URVAŚĪ SĀRVABHOUMĒHĀMṚGAH

OF

VEṄKĀMĀTYA

With 'Lalitha' Tippani of the Editor

*Editor :*

'Prathibhapatu' 'Vedasuktavidyasagara'
Vidwan T. V. SATHYANARAYANA, M. A.
Alankara-Vyakaranashastra Vidwan,
M. A. in Sanskrit, Samskrita Kovida
Senior Research Assistant
Oriental Research Institute, Mysore

ORIENTAL RESEARCH INSTITUTE
MYSORE
1993

# FOREWORD

I am extremely happy to present Venkamatya's 'Urvasisarvabhoumehamrgah' to the lovers of Sanskrit Literature. This work, critically edited with notes by Vidwan T. V. Satyanarayana M.A. is being published by the Oriental Research Institute, University of Mysore, Mysore.

The author of this 'Ihamrga' Dewan Venkappayya was a great prolific writer of the 18th Century A D., was also known as Venkamatya. His contribution to the dramatic world is great both qualitatively and quantitatively.

He has exemplified all major types of Sanskrit Drama. Venkamatya was a minister of Mysore serving normally under the Mysore Kings, Krishnaraja Wodeyar II, Nanjaraja Wodeyar and Bettada Chamaraja Wodeyar, but actually under Hyder Ali from 1763 A.D. to 1780 A.D. He was an eminent scholar in Sanskrit and Kannada. He was also interested in music and painting.

Pradhani Venkappayya played a very prominent role in the History of Mysore, during the 18th Century. He belongs to a village Ramapura which is mentioned in almost all his works, which is on the banks of the Kapini river near Cattanahalli, about 10 miles South-West of Mysore.

It is really admirable that Venkappaiah could write such fine works inspite of his heavy responsibilities in political and social life.

The editor Vidwan T. V. Satyanarayana has highlighted the charming aspects of the present work critically by giving profuse notes. He has utilised two manuscripts available in Oriental Research Institute in editing. Vidwan T. V. Satyanarayana, deserves to be thanked for his meticulous and scholarly work in editing this work. He has also elucidated the peculiarities of the 'Ihamrga' and highlighted the special features of the present work.

It is my pleasant duty to express our gratitude to our beloved Vice-Chancellor, Prof. M. Madaiah who has given us continuous encouragement to our research and publication work. I thank the authorities of the University for their unstinted co-operation and encouragement.

I wish to express our thanks to Smt. Sashi Moorthy, Guruvarya Press, Mysore for having printed this volume nicely. Our thanks are also due to the Director, Mysore University Printing Press, Mysore for his co-operation.

I am sure Sanskrit scholors and Sanskrit lovers and admirers will gladly welcome this valuable publication.

**Dr. M. R. Veerabhadra Swamy**
*Director*
ORIENTAL RESEARCH INSTITUTE
Mysore

Mysore
Date: 8-12-92

## प्रस्तावना

नितान्तं हृष्यति मे मनः यत् "उर्वशीसार्वभौमेहामृग" नामकोऽयं ग्रन्थः प्राच्यविद्यासंशोधनालयात् प्रकाशं नीयत इति। अयं च ग्रन्थः प्राच्यविद्यासंशोधनालयग्रन्थमालायाः एकशताधिकाष्टसप्ततितमं (178) पुष्पम्। पुष्पस्यास्य सुगन्धेन सज्जनसमुदायः तोषं प्राप्नोतु इति भावये। अयं संशोधनालयः शास्त्रग्रन्थान् तथा साहित्यग्रन्थांश्च अप्रकटितान् अपूर्वार्थगर्भितान् परिगणय्य तादृशग्रन्थानेव प्रकटीकरोति। आसेतुहिमाचलं सञ्चार्य, अमूल्यानां हस्तप्रतीनां सङ्ग्रहणम्, तासां संरक्षणम्, संशोधनार्थं स्वीकरणम्, प्रकटनम्, सूक्ष्मचित्रीकरणद्वारा एतासां स्थिरीकरणं च अस्याः संस्थायाः प्रधानं कर्म। वर्तन्ते चात्र शास्त्रविदः तथा साहित्यविदश्च विद्वांसः। ते च ग्रन्थसम्पादनकर्मणि निमग्नाः एतादृशान् अपूर्वग्रन्थान् सम्पादयन्ति ॥

प्रकृते प्रकाशपदं नीयमानोऽयम् ईहामृगः दृश्यकाव्यप्रभेदेषु दशरूपकेष्वन्यतमः। असौ च ग्रन्थः वेङ्कामात्येन रचितः। स तु कविः कर्नाटकप्रान्तीयः। संस्कृतकर्नाटकान्ध्रभाषासु निपुणः। संस्कृतभाषायां नाटकप्रकरणरूपरूपकद्वयं विहाय अवशिष्टेषु भाणाद्यष्टप्रभेदेषु ग्रन्थाः अनेन रचिताः वर्तन्ते। तेषु मध्येऽन्यतमः उर्वशीसार्वभौमेहामृगः। अत्र उर्वशी अप्सरस्त्री, पुरूरवास्तु सार्वभौमः। अनयोः उर्वशीपुरूरवसोः कथा,

ऋग्वेदे, बृहद्देवतायां, सर्वानुक्रमणिकायां, शतपथब्राह्मणे, बोधायनश्रौतसूत्रे, महाभारते, भागवते च वर्तते। एवं वेदपुराणादिषु प्रसिद्धामिमां कथामवलम्ब्य कविरयं वेङ्कामात्यः उर्वशीसार्वभौमेहामृगं व्यरचयत्।

न केवलमसौ वेङ्कामात्यः दशरूपकेष्वन्तर्भूताष्टप्रभेदानाधिकृत्य ग्रन्थान् व्यचीक्लृपत्। अपि तु तदन्यानपि, जगन्नाथविजयं, कुशलव-चम्पूः, सुधाझरी, इत्यादिकान् ग्रन्थान् व्यरचयत्। न केवलं संस्कृत-भाषायाम् अपि तु कर्नाटकभाषायां तथा आन्ध्रभाषायां च एषः अनेककृतीः आरचितवान्। विशेषतः असौ मैसूरुसंस्थाने अमात्यपदवीमलङ्कृतवान्। अमात्योऽपि भूत्वा काव्यरचनाकौशलं सम्पादितवानिति महदाश्चर्यम्। अतः कविनानेन कृतानां रूपकप्रभेदानां सम्पादनं तथा प्रकाशनं चावश्यं करणीयमिति निश्चितं पूर्वमेव। तदनुसारेण अद्यावधि, लक्ष्मीस्वयंवर-समवकारः, सीताकल्याणवीथी, रुक्मिणीमाधवाङ्कः, वीरराघवव्यायोगः, इति ग्रन्थचतुष्टयं मुद्रितम्। पञ्चमोऽयम् उर्वशीसार्वभौमेहामृगाख्यो ग्रन्थः इदानीं सहृदयानां सविधे समर्पितो वर्तते। सुमधुरशैल्या, कथासौष्ठवेन च सुनिबद्धः अङ्कचतुष्टयात्मकोऽयम् ईहामृगः सहृदयानां तोषाय भवेदिति आशासे।

ग्रन्थस्यास्य संशोधनसम्पादकः विद्वान् टि वि. सत्यनारायणः। स तु न केवलं ग्रन्थं सम्पादितवान् किन्तु ग्रन्थाध्ययनकर्तॄणां साहाय्यार्थं 'ललिता' नामिकां सुललितां टिप्पणीं रचितवान्। अस्यामेव संस्थायां विद्यमाने द्वे हस्तप्रती प्रतिगृह्य विद्वत्पूर्णतया सम्पादनकर्मानेन व्यधायि।

असौ तु अलङ्कारशास्त्रे तथा व्याकरणशास्त्रे च निपुणः । संस्कृत एं.ए. पदवीधरः । विद्वत्परीक्षयोः तथा एं.ए. परीक्षायां च प्रथमस्थानमनेन अलाभि । सुवर्णपदकानि चानेन प्राप्तानि । अन्यान्यासु पाठशालासु तथा कलाशालासु दशाधिकवर्षपर्यन्तं अध्यापनं कृतवान् । तथानेकभाषण-स्पर्धासु भागमूढ्वा बहुमानं प्राप्तवान् । संस्कृतभाषायां तथा कर्नाटक-भाषायां षष्ठ्यधिकलेखनानि अनेन लिखितानि मुद्रापितानि च । संस्कृतकर्नाटकानुवादग्रन्था अपि अनेन लिखिताः मुद्रिताश्च वर्तन्ते । धार्मिकशास्त्रीयसाहित्यिकोपन्यासकलासु निपुणोऽसौ अद्यावधि नैकविधस्थलेषु पञ्चशताधिकोपन्यासान् संस्कृतकर्णाटकोभयभाषासु कृतवान् इति निवेदयितुं अतीव तोषस्सञ्जायते । अस्य विद्वत्तां तथा प्रतिभां दृष्ट्वा विविधसङ्घसंस्थाः "प्रतिभापटुः" "वेदसूक्तविद्यासागरः" इति प्रशस्तिप्रदानेन इमं पुरस्कृतवत्यः । एतादृशाः विद्वांसः अस्मिन् संशोधनालये वर्तन्त इति महदिदं प्रमोदस्थानम् ॥

सुधीविधेयः
'पण्डितरत्नम्' 'वेदान्तभूषणम्' 'विद्यावाचस्पतिः' 'वेदान्तसमर्थः'
न्याय-वेदान्तविद्वान् आर्. जि. माळगी, एम्.ए.
उपनिर्देशकः
प्राच्यविद्यासंशोधनालयः

मैसूरु—५
२६-१२-९२

## —विषयाः—



———



# उपोद्घातः

लोकोत्तरवर्णनानिपुणकविकर्म काव्यं श्रव्य-दृश्यभेदेन द्विविधम्। श्रव्यकाव्यं पद्य गद्य-चम्पूभेदेन त्रिविधम्। दृश्यकाव्यं पुनः नाटकादि-भेदेन दशधा भिद्यते। तदुक्तं दशरूपके—

नाटकं सप्रकरणं भाणः प्रहसनं डिमः।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति॥ (१-८)

सामान्यतः संस्कृतसाहित्ये दशरूपकप्रभेदानामपि नाटकमित्येव व्यवहारः अस्ति। परं नाटकं दशरूपकेषु अन्यतमम्। संस्कृतवाङ्मये नाटकानि बहूनि दृश्यन्ते। प्रकरणमपि किञ्चन दृश्यते। परं नाटकप्रकरणे विहाय इतररूपकप्रभेदानाम् उदाहरणानि अल्पीयांस्येव वर्तन्ते। अथापि केचन नाटककाराः इतररूपकप्रभेदानामपि उदाहरणरूपेण कृतीः रचितास्सन्ति। तत्र 'कृष्णविजयव्यायोगः' 'कौण्डिण्यप्रहसनम्' 'दामकप्रहसनम्' 'नटवाटप्रहसनम्' 'पञ्चायुधप्रपञ्चभाणः' 'पार्थपराक्रमव्यायोगः' 'मत्तविलासप्रहसनम्' 'मध्यमव्यायोगः' 'मुकुन्दानन्दभाणः' 'रससदनभाणः' 'रसिकरञ्जनभाणः' 'लम्बोदरप्रहसनम्' 'लटकमेलकप्रहसनम्' 'वसन्ततिलकभाणः' 'शृङ्गारतिलकभाणः' 'शृङ्गारभूषणभाणः' 'शृङ्गारसर्वस्वभाणः' 'सरसकविकुलानन्दभाणः' 'हास्यार्णवप्रहसनम्' 'धनञ्जयविजयव्ययोगः' इत्यादयः दशरूपकस्य अन्यप्रभेदानाम् उदाहरण-रूपेण दृश्यन्ते।

परं विशेषतः प्रसिद्धाः नाटककारास्सर्वे नाटकरचनायामेव विशेषतः आसक्ताः अभूवन्। तत्र कारणमप्यस्ति-नाटके पञ्चसन्धीनाम्, तथा सन्ध्यङ्गानां सर्वेषां मेलनं दृश्यते। पात्रविस्तारः, कथाविस्तारः, वर्णना-

चातुर्यं, रसास्वादनसन्निवेशश्च सहृदयानां विशेषतः भूरि वर्तन्ते। अन्येषु प्रकारेषु एकाङ्कस्य, द्वयोस्त्रयाणां सन्धीनां सङ्कलनस्य, पात्रबाहुल्याभावस्य च कारणेन, तेषां रचनाकार्ये ते अतीव नासक्ताः इत्यूहयितुं शक्यते। परमिदमूहामात्रम्। यतः अन्यैः प्रभेदैरपि सहृदयरञ्जकत्वं भवति इत्यत्रापि वास्तविकत्वमस्ति। एतस्य 'मध्यमव्यायोगः' उदाहरणं भवति। अनेन व्यायोगेन सहृदयाः अतीव आनन्दितास्सन्ति इत्यत्र न काप्युत्प्रेक्षा। अतः दशरूपकस्य इतरप्रभेदानां रचनाकार्येऽपि केचन प्रवृत्ताः। तेषु वेङ्कामात्यः अप्येकः। अस्य समग्रपरिचयः उत्तरत्र क्रियते। सङ्क्षेपतः कथ्यमाने नाटकप्रकरणे विहाय इतरेषु अष्टसु प्रभेदेष्वपि एकैकां कृतिं रचितवानस्ति वेङ्कामात्योऽयमिति अन्तस्साक्ष्य-बहिस्साक्ष्यादिभिः ज्ञायन्ते। तदेव विशदतया उच्यतेऽधुना।

## ईहामृगलक्षणम्

दशरूपकेषु 'ईहामृगः' एकः भेदः। तल्लक्षणं दशरूपके एवं निरूपितमस्ति—

'मिश्रमीहामृगे वृत्तं चतुरङ्कं त्रिसंन्धिकम्।
नरदिव्यावनियमान्नायकप्रतिनायकौ॥
ख्यातौ धीरोद्धतावन्त्यो विपर्यासादयुक्तकृत्।
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः॥
शृङ्गाराभासमप्यस्य किञ्चित् किञ्चित् प्रदर्शयेत्।
संरम्भं परमानीय युद्धं व्याजान्निवारयेत्।
वधप्राप्तस्य कुर्वीत वधं नैव महात्मनः॥

(द॰ रू॰ ३-७२-७५)

मृगवदलभ्यां नायिकां नायकः अस्मिन् ईहते इति ईहामृगः । ख्याताख्यातं वस्तु । अन्त्यः प्रतिनायकः । विपर्यासात् विपर्ययज्ञानात् अयुक्तकारी विधेयः इति प्रतापरुद्रीयरत्नापणव्याख्याने एवमुक्तम् । गर्भावमर्शरहितास्त्रयः सन्धयो यस्मिन् तत् त्रिसन्धिकम् । आभासरसयोरनुरागशून्यनायिकानुरक्तत्वादिति भावः । अत एवोक्तं दशरूपके—'दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः इति । अवधं युद्धमजायुद्धकल्पमित्यर्थः इति ।

साहित्यदर्पणकारेण विश्वनाथेन षष्ठपरिच्छेदे ईहामृगलक्षणमित्थं भणितमस्ति । तद्यथा—

ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्तितः ।
मुखप्रतिमुखे सन्धी तत्र निर्वहणं तथा ॥
नरदिव्यावनियमौ नायकप्रतिनायकौ ।
ख्यातौ धीरोद्धतावन्यो गूढभावादयुक्तकृत् ॥
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ।
शृङ्गाराभासमप्यस्य किञ्चित् किञ्चित् प्रदर्शयेत् ॥
पताकानायका दिव्या मर्त्या वापि दशोद्धताः ।
युद्धमानीय संरम्भं परं व्याजान्निवर्तते ॥
महात्मानो वधप्राप्ता अपि वध्यास्स्युरत्र नो ।
एकाङ्को देव एवाऽत्र नेत्याहुः परे पुनः ॥
दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे ।

मिश्रं ख्याताख्यातम् । अन्त्यः प्रतिनायकः । पताकानायकास्तु नायकप्रतिनायकयोर्मिलिता दश । नायको मृगवत् अलभ्यां नायिकामत्र ईहते वाच्छतीति ईहामृगः ॥

यथा—'कुसुमशेखरविजयादिः इति ॥

अस्य—लक्ष्मीव्याख्याने विस्तृतं विवरणं समीचीनम् एवमुक्तमस्ति—

ईहामृगाख्यं रूपकं निरूपयति— ईहामृग इति। मिश्रं ख्याताख्यातो वृत्तान्तो यत्र स तथोक्तः, चत्वारोऽङ्का यस्मिन् स तथोक्तः रूपकविशेषः ईहामृगः प्रकीर्तितः। व्युत्पत्तिलभ्योऽर्थो विवरणे स्पष्टः। तत्र ईहामृगे मुखप्रतिमुखे सन्धी भवेताम्। तथा निर्वहणं च सन्धिर्भवेत्। अनियमौ नियमरहितौ नरौ वा दिव्यौ वा नरदिव्यौ वा नायकप्रतिनायकौ भवेताम्। एवञ्च नरो नायकः दिव्यश्च प्रतिनायकः, तथा नरः प्रतिनायकः दिव्यश्च नायकोऽत्र भवितुं शक्नोतीति स्फुटोऽर्थः। तयोराद्यो धीरः अन्त्यः उद्धतः स च गूढभावात् प्रच्छन्नभावात् अयुक्तकृत् अयुक्तकार्यकारी। स्वस्य रमणमनिच्छन्तीं दिव्यस्त्रियं दिव्याङ्गनाम् अपहारेण बलात्कारेण आदिपदाच्छलेन च इच्छतः सुरतं कामयमानस्य अस्य प्रतिनायकस्य किञ्चित् किञ्चित् शृङ्गाराभासमपि कविः प्रदर्शयेत् उपवर्णयेत्। दिव्या दिवि भवा मर्त्या मनुष्या वा उद्धतस्वभावा उत्कटप्रकृतयः दश पताकानायकाः 'व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते' इत्युक्तपताकाख्यार्थप्रकृतिसंयुक्ता भवेयुः। तथा च नायकप्रतिनायकौ द्वौ पताकानायका दश इति मिलित्वा दिव्यमर्त्या द्वादशनायका भवेयुरित्यर्थः। परं प्रतिनायकबलं संरंभं क्रोधम्, आनीय प्रापय्य स्थितस्य नायकस्य व्याजात् कार्यान्तरच्छलेन युद्धं निवर्तते। निर्वर्तयेदिति पाठे तु परं युद्धस्थानमानीय संरभ्भं निर्वर्तयेदित्यर्थः इति वागीशाः। अत्र ईहामृगे महात्मानो लोकाः वधप्राप्ताः वधयोग्या अपि नो वध्याः स्युः। तेषां वधः पुराणादिषु ख्यातोऽपि वधानर्हत्वात् कविभिर्न वर्णनीय इत्यर्थः। अन्यमतं दर्शयितुमाह—एकाङ्क इति। एकः अङ्कः यत्र स एकाङ्कः, अत्र ईहामृगे देव एव नेता नायक

इति पुनः परे आहुः। तदितरे च दिव्यस्त्रीहेतुकं युद्धं नायकाश्च षट् इत्याहुरिति पूर्वेण सम्बन्धः। ईहामृगव्युत्पत्तिं दर्शयति नायको मृगवदिति। अलभ्यां दुष्प्राप्यत्वेन अप्राप्याम्। तथा च अस्मिन्नर्थे ईहामृगशब्दः पृषोदरादित्वात् साधनीयः* ।

## उर्वशीसार्वभौमेहामृगः

अमात्येन वेङ्कामात्येन दशरूपकलक्षणानुसारात् 'उर्वशीसार्वभौमेहामृगः' इत्याख्यो ईहामृगः सुनिबद्धोऽस्ति। उर्वशी अप्सरस्त्री। पुरूरवाः नाम राजा सार्वभौमशब्देन ग्राह्यः। 'उरून् महतोऽपि अश्नुते व्याप्नोति वशीकरोतीति, यावत्। यद्वा उरुं नारायणस्य महर्षेः उरुप्रदेशम् अश्नुते योनित्वेन व्याप्नोतीति। उर्वशी च सार्वभौमश्च उर्वशीसार्वभौमौ। तयोः ईहामृगः उर्वशीसार्वभौमेहामृगः इति विग्रहः। उर्वशीसार्वभौमसम्बन्धी इहामृगः इति फलितोऽर्थः।

प्रकृतलक्षणानुसारेण अस्मिन् ईहामृगे राजा पुरूरवाः अदिव्यनायकः। अयञ्च मनुष्यः। परमन्ते नायिकां प्राप्नोतीति कृत्वा नायको भवति। सुराधिपः महेन्द्रः प्रतिनायकः। स च दिव्यः। उभावप्यत्र धीरोद्धतौ। उर्वशी अप्सरस्त्री। सा च दिव्याङ्गना। इयमेवाऽत्र नायिका। अस्यामुर्वश्यां नृपमहेन्द्रयोरुभयोरपि अभिलाषः। परमुर्वशी इन्द्रं विहाय राजानं पुरूरवसमेवेच्छति। कथमपि तां लब्धुम् इन्द्रः एतयोर्मध्ये अन्तरायरूपेण आगत्य राज्ञः पुरूरवसः वेषेण तामपहर्तुमपि सन्नद्धो भवति। एतन्मध्ये यदा राजा

---

* विश्वनाथकृत 'साहित्यदर्पणस्य' आचार्यकृष्णमोहनशास्त्रिकृतलक्ष्मीटीकातः उद्धृतोऽयं भागः। (पृष्ठसंख्या-४३७-४३९) (प्रकाशनम्-चौखम्बा संस्कृत सीरिज़ आफिस् बनारस्-१० काशीसंस्कृत ग्रन्थमाला-१४५. द्वितीयं संस्करणम्-१९५५

आगच्छति, तदा महेन्द्रस्य च्छलं सर्वे जानन्ति । ततः उभयोः उर्वश्याः कृते युद्धस्सञ्जायते । अन्ते नारदमुनिरागत्य एतयोर्युद्धं निवारयति । उर्वशी राजानमेव परिणेतुमभिलषति, न पुनर्महेन्द्रम् । तत्पश्चादनयोः परिणयो भवति । अत्र महेन्द्रः अनिच्छन्तीमुर्वशीमीहते । परं सा अमुं नेच्छति । अथापीन्द्रः तस्यां स्वकीयां रतिं प्रकटयतीति कृत्वा रतेरेकमुखत्वात् श्रृङ्गाराभासः अत्र परिदृश्यते । नृपः पुरूरवा अपि दिव्यामप्सरस्स्त्रियमुर्वशीं मृगवदीहते इति उर्वशीसार्वभौमेहामृगः इति नामधेयमन्वर्थं भवति । उर्वशीकथा वेदपुराणादिषु वर्तते इति कृत्वा तत्र राज्ञः पुरूरवसः प्रेम इति कथया च ख्याताख्यातं मिश्रं वृत्तं भवति । अत्र चत्वारोऽङ्काः वर्तन्ते । मुखप्रतिमुखनिर्वहणसन्धयस्त्रयः अत्र विद्यन्ते । पुरूरवाः देवेन्द्रं जित्वा उर्वशीं नायिकां पर्यणैषीत् इति कृत्वा स एव नायकः । वीररौद्रयोःरसयोः समागमोऽत्र दृश्यते । श्रृङ्गाराभासोऽपि मध्ये परिदृश्यते । परमत्र वीररस एव मुख्यः । रौद्रश्रृङ्गाराभासौ तस्य अङ्गरसौ भवतः ।

## उर्वशीपुरूरवसोः कथायाः आकरः

i) उर्वशीपुरूरवसोः कथा इदंप्रथमतया ऋग्वेदे एव परिदृश्यते । ऋग्वेदे संवादसूक्तानि बहूनि वर्तन्ते । तेषु उर्वशीपुरूरवसोः संवाद एव प्रधानतमः अस्ति । सूक्तमिदं ऋग्वेदस्य दशममण्डले वर्तते । पञ्चनवतितमं सूक्तमेतत् । अत्र अष्टादशमन्त्राः विद्यन्ते । उर्वशी दिव्याप्सराः । पुरूरवास्तु मनुजः राजा च । इयं तेन सह भुवि वर्षचतुष्कपर्यन्तं पत्नी भूत्वा सहचरी आसीत् । ततः अन्तर्वत्नी भूता सा तिरोऽभवत् । राजा तामन्वेष्टुं जगाम । एकस्मिन् सरसि इतराभिः अप्सरोभिः क्रीडतीं तां पश्यति । एतावती कथा तत्र लभ्यते । अनयोः संवादः अस्मिन् सूक्ते उपवर्णितः ।

"राजा तां दृष्ट्वा क्षणमात्रं स्थित्वा, मया सह संलप। तेन मम आनन्दो जायते। अहं मदीयं राज्यं, प्रजां, सर्वस्वं च त्यक्त्वा अत्रागच्छमिति" प्रार्थयति। परं सा वदति। अहमलभ्या। त्वया सह मम समागमः आकस्मिकः। अथापि तव गुणानहं सर्वदा स्मरामि। त्वं राजा। प्रजाधर्मं परिपालय। एकस्याः नार्याः कृते शोकः न युक्तः। पुत्रोत्पत्तिपर्यन्तं आवयोस्सम्बन्धः इति निश्चितः आसीत्। अतः मा शुच।

"पुरूरवो मा मृथा मा प्र पप्तो
मा त्वा वृकासो अशिवास उक्षन्।
न वै स्त्रैणानि सख्यानि सन्ति
सालावृकाणां हृदयान्येता॥

(ऋ. सं. १० मं–९५ सू–१७ मन्त्रः)

'राजन् त्वं प्राणान् मा त्यज। तव पतनमपि मा भूत्। अशुभाः वृकाः त्वां मा हिंसेयुः। स्त्रीणां सख्यं न वास्तविकं, मिथ्या च। तासां हृदयानि वृकाणां हृदयाणीव। अतः निवर्तस्वेति वदति। अथापि राजा प्रतिनिवर्तयितुं प्रार्थयति। तदा सा अन्ते वदति—'पुरूरवः मर्त्यस्त्वं हविर्भिः यागे देवान् प्रीणय। तदा त्वं स्वर्गमागत्य अस्माभिस्सह सन्तोषमेष्यसि। अतः अधुना ममाभिलाषं त्यक्त्वा गच्छ*" इति वदति। इयती कथा अष्टादशसु मन्त्रेषु संलग्ना। अनयोः प्रणयः अपूर्वः। एकः मर्त्यः। अन्या तु अप्सराः। एतयोः समागमः सरसि अभूदित्यपि अपूर्वा घटनैव। अनयोः संभाषणकाले

---

* इति त्वा देवा इम आहुरैळ यथेमेतद्भवसि मृत्युबन्धुः।
प्रजा ते देवान् हविषा यजाति स्वर्ग उ त्वमपि मादयासे।

(ऋ. सं. १० मं–९५ सू–१८ मन्त्रः)

इतराः अप्सरसः अन्तर्हिता आसन् । उर्वशी पुरूरवसः जीवने विद्युदिव आगता, गता च । तस्य सर्वानभिलाषान् सफलयामास । राजा तया सुपुत्रं लेभे । तस्य कुलवृद्धिरपि तयाऽभूत् । अत्र सूक्ते उर्वश्याः सद्गुणः प्रकाशते । सा तस्य सुगुणान् प्रशंसते । तं राजकार्ये प्रवर्तयितुमपि प्रेरयति । त्वं राजा । सङ्ग्रामभारः तव शिरसि वर्तते । एकस्याः स्त्रियाः कृते मा शुच इत्यप्युपदिशति* । उदात्तरूपेण सा अत्र चित्रिता ।

ii) बृहद्देवतायां सप्तमेऽध्याये अनयोर्विचारः उद्धृतोऽस्ति । पुरा उर्वशी नाम्नी अप्सराः राजर्षौ पुरूरवसि संविदमर्थात् शपथं कृत्वा सहधर्मचरी सती जीवति स्म । अनयोः संवासं दृष्ट्वा असूयाविष्टः पाकशासनः इन्द्रः तयोर्वियोगार्थं वज्रमादिशति । तदा वज्रः स्वीयया मायया तयोः प्रीतिमभिनत् । राजा तया विरहितः उन्मत्तस्सन् इतस्ततः अटन् एकस्मिन् सरसि पञ्चभिः सखीभिस्सह क्रीडन्तीमभिरूपामुर्वशीम् अपश्यत् । दुःखार्तः राजा पुनरेहीति तां प्रार्थयति । परं सा वदति—'अहमप्राप्या इदानीम् । स्वर्गे पुनः मां प्राप्स्यसीति । इयती कथा अत्र निबद्धा । इदमेवाख्यानं यास्कः संवादमिति, शौनकः इतिहासं मन्यते इत्युक्तम्† ।

---

* महे यत् त्वा पुरूरवो रणायाऽवर्धयन् दस्युहत्याय देवाः । स चा यदासु जहतीष्वत्कममानुषीषु मानुषो निषेवे ।

† प्र तद्दुःसीम इत्यृग्भ्यां राज्ञां दानं च शंसति ।
पुरूरवसि राजर्षावप्सरास्तूर्वशी पुरा ।
न्यवसत्संविदं कृत्वा तस्मिन्धर्मं चचार च ।
तया तस्य च संवासमसूयन् पाकशासनः ।
पैतामहं चानुरागमिन्द्रवच्चापि तस्य तु ।
स तयोस्तु वियोगार्थं पार्श्वस्थं वज्रमब्रवीत् ।
प्रीतिं भिन्द्धि तयोर्वज्र मम चेदिच्छसि प्रियम् ।
तथेत्युक्त्वा तयोः प्रीतिं वज्रोऽभिनत् स्वमायया ॥
ततस्तया विहीनस्तु चचारोन्मत्तवन्नृपः ।

iii) पद्मपुराणस्थकथा एवमस्ति—

—तारा चन्द्रयोः पुत्रः बुधः । बुधः इलायां पुरूरवसं नामकं पुत्रं लेभे । सः पुरूरवाः अश्वमेधशतं स्वतेजसा अकरोत् । सः हिमालये तपस्तेपे । ब्रह्मणः वरात् लोकैश्वर्यञ्चागात् । सप्तद्वीपपतिश्च संवृत्तः । केशिप्रभृतयो दैत्याः तद्भृत्यत्वमुपागताः । तस्य रूपसौन्दर्येण अप्सराः उर्वशी मोहिता बभूव । एकदा राजा आत्मानं द्रष्टुमागतान् धर्मार्थकामान् अर्घ्यपाद्यादिभिः पूजयामास । परं धर्ममधिकां पूजां चक्रे । तेन कुपितः अर्थः 'लोभात् त्वं नाशमेष्यसीति शशाप'। कामोऽपि 'त्वं गन्धमादने कुमारवने उर्वशीभवात् वियोगात् उन्मत्तो भविष्यसीति शशाप । धर्मस्तु तं सान्त्वयन् 'त्वं धार्मिकः चिरायुश्च भविष्यसि । तव सन्ततिः आचन्द्रतारकं वृद्धिमायाति । उर्वशीकामसंभवः उन्मादः षष्ठिवर्षाणि यावद्वर्तते । ततः सा अप्सराः तव वशमेष्यती' त्युक्त्वा अन्तरगात् ।

पुरूरवाः प्रतिदिनं देवेन्द्रं द्रष्टुं गच्छति स्म । एकदा देवेन्द्रेण सह रथे गच्छन् सः उर्वशीं चित्रलेखां च अपहरन्तं केशिनामकं राक्षसमन्तरिक्षे

---

चरन् सरांसि सोऽपश्यत् अभिरूपामिवोर्वशीम् ।
सखीभिरभिरूपाभिः पञ्चभिः पार्श्वतो वृताम् ।
तामाह पुनरेहीति दुःखात्मा त्वब्रवीन्नृपम् ।
अप्राप्याहं त्वयाद्येह स्वर्गे प्राप्स्यसि मां पुनः ॥

आहनं प्रति चाख्यानमितरेतयोरिदम् ।
संवादं मन्यते यास्क इतिहासं तु शौनकः ॥

(बृहद्देवता—सप्तमोऽध्यायः १४६–१५३ श्लोकाः)

प्रकाशनम्—(The Brhad-devata of Saunaka)
Edited by A. A. Macdonell, Part-I
Motilal Banarasidas 1965—p. No. 91
O.R.I. Book No. A. 4129

दृष्ट्वा तेन सह नियुध्य तं निर्जित्य उर्वशीमिन्द्राय ददौ । तेन प्रीतः इन्द्रः नियमेनैकेन उर्वशीं राज्ञे प्रादात् । एकदा भरतः मेनकां, रम्भामुर्वशीं च 'लक्ष्मीस्वयंवरं' नाम नाटकमभिनेतुमादिदेश । लक्ष्मीपात्राभिनयसमये उर्वशी पुरूरवसं दृष्ट्वा कामपीडिता सती पुरातनवेदितं सर्वमभिनयं विस्मृता । तेन कुपितः भरतः— 'तस्य वियोगात् भूतले उर्वशी पञ्चपञ्चाशदब्दानि लता भूता भविष्यति । पुरूरवाः पिशाचत्वमेत्य तत्रैव असौ भविष्यतीति च शशाप । ततः सा उर्वशी तं चिरं भर्तारमकरोत् ।

शापानुभवनान्ते बुधसूनुना पुरूरवसा उर्वशी आयु-दृढायु-वश्यायु-धनायु-धृतिवान् वसु-दिविजात-सुबाहुनामकानष्टौ सुतान् लेभे इति [1]पद्म-पुराणकथा ।

ii) भागवते उर्वशीपुरूरवसोः कथा —

पुरा सोमतारयोः पुत्रात् बुधात् इलायां पुरूरवाः जज्ञे । एकदा तस्य पुरूरवसः [2]रूपगुणादीन् श्रुत्वा अप्सराः उर्वशी स्मरशरपीडिता सती तत्समीपमाजगाम मित्रावरुणयोः शापात् नरलोकं प्राप्ता उर्वशी कन्दर्पमिव रूपिणं पुरूरवसं ज्ञात्वा धैर्यमालम्ब्य तत्समीपमुपतस्थे । सः नृपतिः देवीं तां विलोक्य हर्षोत्फुल्ललोचनस्सन् उवाच हे वरारोहे ! स्वागतं ते । आस्यताम् । किं करवाम ? मया सह संरमस्व । आवयोः रतिः शाश्वतीस्समाः अस्तु । इत्येवमुक्तं तं प्रति उर्वशी आह हे सुन्दर त्वयि कस्याः स्त्रियाः

---

[1] पद्मपुराणम् – सृष्टिखण्डः-भाग–१ अध्यायः-१२ — श्लोकाः ६०–८७ प्र॥ जयचामराजेन्द्रग्रन्थमाला संख्या-१६ कन्नडानुवादः—बेलदकेरे सूर्यनारायणशास्त्री, मैसूरु–1945. O.R.I. Book No. K-5263. पुटसंख्या 292–295)

[2] रूपं, सौन्दर्यम्, औदार्यम्, वदान्यता, शीलं, सुखभावः, सद्वृत्तिः, द्रविणं, धनं, विक्रमः, पराक्रमः, इत्यादीन् रूपगुणादीन्.

मनः दृष्टिश्च न सज्जेत । तवाङ्गान्तरं वक्षः दृष्ट्वा रन्तुमिच्छया सर्वं च्यवते । यदि मत्संमानमिच्छसि तदा मदुक्तमङ्गीकुरु—" एतौ द्वौ मेषौ मया पुत्रतया पालितौ, त्वदन्तिके निहितौ । त्वं रक्षस्व । घृतमेव मम भक्ष्यं स्यात् । मैथुनादन्यत्र काले त्वां नग्नं नेक्षिष्ये । यदा त्वं मैथुनादन्यत्र आत्मानं नग्नं दर्शयिष्यसि तदैवाहं गमिष्यामीत्युवाच । तदङ्गसङ्गाभिलाषी पुरूरवाः तस्याः भाषाबन्धनं तथास्त्विति अङ्गीचकार । ततस्सः तया सह यथेष्टं रेमे । कदाचिदुर्वशीमपश्यन्निन्द्रः तया विना ममास्थानं नातीव शोभते इति मन्यमानः तामानेतुं गन्धर्वान् प्रेरयामास । ते गन्धर्वाः मध्यरात्रे अन्धकारे संप्राप्ते सति आगत्य पुरूरवसि जायया उर्वश्या निक्षेपतया स्थापितौ मेषौ जह्रुः । तदा तैः नीयमानयोः पुत्रवत्पालितयोः मेषयोः रोदनं निशम्य उर्वशी " नपुंसकेन वृथैव आत्मानं वीरं मन्यमानेन नाथेन हताऽस्मि । अस्य विस्रंभात् अहं नष्टा । दस्युभिः अपत्ये हृतेऽभूताम् । अयं च नारीवत् भीतस्सन् शेते । दिवा तु पुरुषवद्व्यवहरति " इत्युवाच । एवंभूतैः वाग्रूपैस्सायकैः विद्धः पुरूरवाः खड्गमादाय रुषा नग्न एव निशि गन्धर्वाननुजगाम । तदा ते गन्धर्वाः उरणौ तत्रैव विसृज्य स्वविद्युता प्रद्योतन्त । तदा सा उर्वशी मेषावादायायान्तं पतिं पुरूरवसं नग्नं ददर्श । ततश्च सा भाषाभङ्गात् निर्जगाम । ततः ऐलः पुरूरवाः शयने जायामुर्वशीमपश्यन् विमना जातः । ततश्च तस्याः विरहेण विक्लवः उन्मत्तवन्महीं बभ्राम । एवं पृथ्वीं पर्यटन् स पुरूरवाः कुरुक्षेत्रे सरस्वतीतीरे पञ्चभिस्सखीभिः स्थितां प्रहृष्टवदनाम् उर्वशीं दृष्ट्वा वेदप्रसिद्धसूक्तार्थभूतं वचनं प्राह । हे जाये अद्याप्यनिर्वृत्य मत्कृतां निर्वृतिमनवाप्य घोरे विरहदुःखे त्यक्तुं त्वं नार्हसि । अतस्तिष्ठ तिष्ठ । मिथस्संलापान् करवावहै । हे देवि त्वया दूरं हृतः मदीयः कमनीयो देहः अस्मिन्नेव स्थाने पतति । अत्र पतितं

देहं वृकाः गृध्राश्च खादन्ति इति । एवमुक्ता उर्वशी तमाह । न म्रियस्व । त्वं पुरुषोऽसि । धैर्यमावह । इमे इन्द्रियरूपाः वृकाः त्वां मा स्म अद्युः । स्त्रीणां क्वापि सख्यं नैवास्ति । वृकाणां हृदयं यथा क्रूरं तथैव स्त्रीणां हृदयमपि । स्त्रियो हि अकरुणाः क्रूराः दुर्मर्षाः प्रियसाहसाः सत्यः अल्पार्थेऽपि विश्रब्धं पतिं भ्रातरं वा घ्नन्ति । अन्यान् घ्नन्तीति किमुत वक्तव्यम् । किञ्च अज्ञेषु अलीकविश्रम्भं विधाय त्यक्तसौहृदाः नवं नवमभीप्सन्त्यः पुंश्चल्यः स्वैरवृत्तयः भवन्ति । अतः मत्सख्यं त्यज । हे भर्तः भवान् संवत्सरान्ते एकस्यां रात्र्यां मया सह वसतु । तथा सति अपराण्यपत्यानि नौ भविष्यन्तीति । तद्वचनात् तां देवीमन्तर्वत्नीमुपालक्ष्य स पुरूरवाः स्वां पुरीं ययौ । ततः पुनः संवत्सरान्ते सः गतस्सन् पुत्रेणागतामुर्वशीमुपलभ्य मुदा युक्तः तया सह तां निशं सम्यगुवास । अथ निशावसाने स्वविरहेण व्याकुलमत एव दीनं पुरूरवसमुर्वशी प्राह स्म । त्वमिमान् गन्धर्वान् स्तुत्यादिना प्रीतान् कुरु ते च तुभ्यं मां दास्यन्तीति । सः तथैवाकरोत् । संस्तुवतः तस्य तुष्टाः गन्धर्वाः तस्मै अनेन अग्निना उर्वशीलोकप्राप्तिसाधनं कर्म कृत्वा ततः उर्वशीं प्राप्स्यतीति अभिप्रायेण अग्निस्थालीं पात्रविशेषं ददुः । ततस्सः कामान्धतया तां स्थालीमेव उर्वशीं मन्यमानः तया सहितः वने विचरन् संगमसमये नेयमुर्वशी किन्तु अग्निस्थालीत्यबुध्यत । ततश्च तां स्थालीं वने एव न्यस्य गृहे गत्वा निशि नित्यं तामेव ध्यायतः तस्य मनसि त्रेतायां संप्रवृत्तायां त्रयी अर्थात् कर्मबोधकं वेदत्रयं प्रादुरभूत् । सः स्थालीस्थापनस्थलं गतस्सन् शम्या गर्भे जातमश्वत्थं विलक्ष्य अस्मिन्नग्निरस्तीति च ज्ञात्वा तेनाश्वत्थेन द्वे अरणी कृत्वा उर्वशीलोकप्राप्तिकाम्यया अधरारणिमुर्वशीं ध्यायन् उत्तरामरणिं चात्मानं ध्यायन् उभयोर्मध्ये यत्काष्ठं तत्प्रजननं ध्यायन् पुरूरवाः 'उर्वश्यामुरसि पुरूरवा' इति मन्त्रतः अग्निं ममन्थ । तेन

जातवेदाः अग्निर्जातः । स च त्रय्या विद्यया विहितेन आधानसंस्कारेण त्रिवृदाहवनीयादिरूपः सन् राज्ञा पुरूरवसा पुत्रत्वे कल्पितः। तेन विभावसुना यज्ञफलदं सर्वदेवताशरीरकम् आश्रितार्तिहरं भगवन्तमधोक्षजं उर्वशीलोकं कामयमानः राजा आराधितवान् । पुरा कृतयुगे जनाः सत्वप्रधानाः भगवद्ध्याननिष्ठाः आसन् । तदा सर्वासां वाचां बीजभूतः प्रणवः एक एव वेद आसीत् । तथा देवेऽपि नारायणः एक एव आसीत् नान्यः। अग्निश्च एको लौकिक एव। वर्णश्च एको हंसाख्य एव आसीत् । रजः-प्रधाने तु त्रेतायुगे वेदादिविभागेन पुरूरवसः सकाशादेव कर्ममार्गः प्रकटो बभूव । ततो राजा पुरूरवाः परलोकसाधनभूतेन पुत्रतयाङ्गीकृतेन प्रजया अग्निना गन्धर्वलोकमेयिवान् ॥ ऐलस्य चोर्वशीगर्भात् आयुः श्रुतायुः सत्य युः रयः विजयः जयः इति षडात्मजा आसन्निति [1]भागवतोक्तकथा ।

(v) महाभारतस्थकथा—

पुरूरवास्ततो विद्वान् इलायां समपद्यत ।
सा वै तस्याभवन् माता पिता चेति हि नः श्रुतम् ॥

त्रयोदशसमुद्रस्य द्वीपानश्नन् पुरूरवाः ।
अमानुषैः वृतः सत्वैः मानुषः सन् महायशाः ॥

विप्रैः सः विग्रहं चक्रे वीर्योन्मत्तः पुरूरवाः ।
जहार च स विप्राणां रत्नान्युत्क्रोशतामपि ॥

सनत्कुमारस्तं राजन् ब्रह्मलोकादुपेत्य ह ।
अनुदर्शयां ततश्चक्रे प्रत्यगृह्णान्न चाप्यसौ ॥

ततो महर्षिभिः क्रुद्धैः शप्तः सद्यो व्यनश्यत ।

---

[1] श्रीमद्भागवतम्— नवमस्कन्धः—चतुर्दशोऽध्यायः-१५-४९ श्लोकाः, तथा . पञ्चदशोऽध्याये प्रथमः श्लोकः)

लोभान्वितो मदवशात् नष्टसंज्ञो नराधिपः ।
स हि गन्धर्वलोकस्थः उर्वश्या सहितो विराट् ॥
आनिनाय क्रियार्थेऽग्नीन् यथावद्विहितांस्त्रिधा ।
षट्सुता जज्ञिरेऽथैलादायुर्धीमानमावसुः ।
दृढायुश्च वनायुश्च श्रुतायुश्चोर्वशीसुताः[1]॥ इति ॥

(vi) उर्वशीपुरूरवसोः कथा शतपथब्राह्मणेऽपि वर्तते । तत्रापि भागवतोक्तकथावदेव कथाऽस्ति । उर्वशी भाषाबन्धत्रयेण राजानं पतिं स्वीकरोति । तेषु शपथेषु सः मैथुनादन्यत्र नग्नमात्मानं न दर्शयेदित्यप्येकं शपथमासीत् । गन्धर्वाणां कुटिलतन्त्रेण उर्वशी नग्नं राजानं पश्यति । तदा सा तिरोभवति । राजा उन्मत्तस्सन् सर्वत्र अटति । एकदा एकस्य सरसः समीपं तां सखीभिस्सह दृष्ट्वा तया सह संलपति । इदं संभाषणं अत्र ब्राह्मणे वर्तते । अन्ते तयोस्समागमः अभूद्वा न वेति न ज्ञायते ।

(शतपथब्राह्मणम्—११-५-१)

(vii) अनयोः कथा बोधायनश्रौतसूत्रे, सर्वानुक्रमणिकायां च वर्तते । कालिदासस्य विक्रमोर्वशीयनाटकस्य कथायाः मूलमेतदेवागतमिति ज्ञायते ।

(viii) उर्वशीकथा पुराणादिषु विद्यते ।

इयमुर्वशी एका अप्सराः । नरनारायणौ बदरिकाश्रमे तपःकरण-वेलायां इन्द्रेण प्रेरिताः काश्चन देवविलासिन्यः तयोः तपोभङ्गार्थं तत्रागताः । तदा नारायणः स्वीयमुरुप्रदेशमास्फालयामास । ततः लोकोत्तरा एका

---

[1] महाभारते आदिपर्वणि-संभवपर्वणि ययात्युपाख्याने-७० तमेऽध्याये १६-२२ श्लोकाः ।

लावण्यवती तरुणी जनितवती । सैव उर्वशी । तस्याः लावण्यातिशयं दृष्ट्वा देवविलासिन्यः लज्जया निर्गच्छन् इति देवीभागवतकथा ।

(दे.भा. ४-६, १-१३)

मित्रनामकसूर्यस्य शापात् पुरूरवसा सह भुवि उवास इति रामायणे (वा. रा. उत्तरकाण्डे--५६ अध्याय:) पद्मपुराणे च (प.पु. ५-२२) कथाऽस्ति ।

एवम् उर्वशीपुरूरवसोः कथा वेदपुराणादिषु प्रसिद्धाऽस्ति । तामेव कथामनुसृत्य अयं च वेङ्कामात्यः उर्वशीसार्वभौमेहामृगं रचयामासेति ज्ञायते ।

उर्वशीसार्वभौमेहामृगस्य कथा—

राजा पुरूरवाः इन्द्रसखा । एकदा सः देवलोकं जगाम । देवेन्द्रसभायां देवाप्सराः उर्वशी ननर्त । तस्याः अपूर्वं रूपसौन्दर्यं दृष्ट्वा तस्यां प्रीतिः समजनि । साप्युर्वशी राज्ञः अनुपमं रूपसौन्दर्यं गुणं च ज्ञात्वा तस्मिन् राज्ञि अनुरक्ता बभूव । परम् उभावपि स्वीयमभिलाषं रहस्येव न्यधाताम् । परं देवेन्द्रोऽपि उर्वश्यामनुरक्तस्सन् तस्याः देहसङ्गार्थमागच्छति । उर्वशी सख्या सह राज्ञः विषयमेव कथयन्ती वर्तते । तयोस्संभाषणं रहसि इन्द्रः शृणोति । परं सा मां प्रत्येव वदतीति इन्द्रः मनुते । सा मय्यनुरक्ता वर्तते इति चेत् मदीयं भाग्यमित्येव जानाति । संभाषणान्ते सा राजानमभिलषतीति ज्ञात्वा क्रुद्धो भवति । चित्ररथः तं निवार्य उपायमेकं सूचयति । राजवेषेण उर्वशीं सङ्गच्छतु भवानिति चित्ररथवचनानुसारात् पुरूरवसः वेषं धृत्वा उर्वशीसमीपं गच्छति । तं दृष्ट्वा राजैवागत इति उर्वशी लज्जिता भवति । तस्याः सखी तमुपचरितुं गच्छति । किन्तु सैव करोत्विति राजा सूचयति । तदनुसारात् तमुपचरितुं सन्नद्धा भवति उर्वशी । एतस्मिन् समये एव राजा पुरूरवाः तत्रागच्छति । उभौ पुरूरवसौ दृष्ट्वा उर्वशी किमपि कर्तुमजानन्ती तिष्ठति । राजा स्वीयवेषधारिणं महेन्द्रं उर्वशीमपहर्तुं

स्वकीयं वेषं धृत्वा आगतं राक्षसमिति मत्वा तं हन्तुमुद्युक्तः। राजवेषधारी इन्द्रोऽपि राजानं हन्तुं झटिति गच्छति। एतस्मिन्नन्तरे नारायणमुनेराज्ञां स्वीकृत्य आगतः कश्चन तापसः अयं राजा पुरूरवाः अयं च राजवेषधारी इन्द्रः इति उभयोः निजस्वरूपं उर्वशीं सखीं च कथयति। तदा उर्वशी व्याकुला भीता च भवति। इन्द्रः राजवेषमपहाय स्वीयरूपेणैव राज्ञा पुरूरवसा सह योद्धुं प्रक्रमते। भंकरं तुमुलं प्रचरति। एतस्मिन्नेव समये उभयोर्मध्ये नारदमुनिरागत्य –उर्वशी सर्वसाधारणस्त्री। तस्याः कृते उभयोर्युद्धं न समीचीनम्। सा यमिच्छति तस्यैव पत्नी सा भवति। इयं नारायणमुनेराज्ञा इति कथयति। उर्वशी राजानमेव श्रृणुते। इन्द्रः तस्य सेना च स्वर्गं गच्छति। उर्वशीपुरूरवसौ नारदमुनिं नमस्कुरुतः। गुणसंपन्नम् आत्मजं लभस्वेति राजानमनुगृह्णाति मुनिः। इयं च कथा अत्र ईहामृगे सुनिबद्धाऽस्ति।

## ग्रन्थकर्तुः परिचयः

अस्य उर्वशीसार्वभौमेहामृगस्य कर्ता वेङ्कामात्यः। वेङ्कयार्यः वेङ्कप्पय्यः इत्यादीनि नामान्तराण्यस्य सन्ति। अस्य कुलं मौनभार्गवकुलम्। द्विजोऽयं हम्पय्यनामकमन्त्रिणः तनयः। वावाम्बिका एतस्य जननी। रामपुरः अस्य जन्मभूमिः। संस्कृतकर्णाटकान्ध्रभाषासु अनेकाः कृतयः अनेन सुनिबद्धाः। अन्तस्साक्ष्यबहिस्साक्ष्याभिरेव एते सर्वे विषयाः ज्ञायन्ते। तद्यथा—

i) वीरराघवव्यायोगस्य[1] प्रथमाङ्के—

'यस्य कविर्हि वावाम्बिकागर्भकलशजलधिपूर्णचन्द्रः।
निरवधिकदीनानुकम्पी हम्पार्यतपोरूपो वेङ्कामात्यशिरोमणिः॥

---

[1] Mss. No. B. 192 Mss. B. 360
Mss. P. 2586, O.R.I. Mysore.

योऽसौ कामविलाससत्कृतिकृती कर्णाटरामायण-
प्रौढग्रन्थविधायकः समकरोत् काव्यं हनूमज्जयम् ।
चम्पूं कौशलवीं महेन्द्रविजयं श्रीमच्चिदद्वैतिकां
तत्कुक्षिंभरिसंयमिप्रहसनं श्रीमान् स वेङ्कप्रभुः ॥ किं च
ध्यानेनेन्द्रियसंरोधान्मौनभार्गवतां ययौ ।
यस्तद्वंशेऽजनिष्टाऽसौ फलत्येव हि यत्कृतम् ॥

ii) [1]रुक्मिणीमाधवाङ्कस्य प्रस्तावनायाम्—

यः श्रीमानखिलेष्टदानविभवो यस्माच्चिदद्वैतकं
जातं कामविलासराघववरव्यायोगकर्ता च यः ।
यल्लीलारचितो महेन्द्रविजयो योऽसौ हनूमज्जय-
प्रादुर्भावखनिर्यतो विरचितं कर्णाटरामायणम् ॥

नटी—णादं णादं (ज्ञातम्, ज्ञातम्)

(संस्कृतमाश्रित्य)

योऽसौ वाबाम्बिकागर्भशुक्तिमुक्तामणिप्रथः ।
यं हम्पयार्यवंशाब्धिकौस्तुभं विबुधा विदुः ॥ इति

---

[1] Mss. No. p. 2586/8, Mss. No. p. 2773/5
M ss. No. 193/7, Mss. No. 360/4
O.R.I. Mysore.

iii) [1]सीताकल्याणवीथीप्रस्तावनायाम्—

सूत्रधारः— यज्जगद्विख्यातविरुदाङ्कमपि वेङ्कामात्यम् अधुना ज्ञातव्य-माकलयति—

यं च वाबाम्बिकाहम्बसुधीमुक्तमूर्जितम् ।
वदन्ति विबुधाभूयस्सभासु रसवेदिनाम् ॥

नटी— आर्य! सविशेषं प्रत्यभिज्ञा जाता । एष एव खलु कर्णाटक-रामायणसीतापरिणयादिप्रबन्धनिर्वहणसाहस इति तत्र तत्र गीयते—

सूत्रधारः—कश्शक्तः तत्प्रबन्धसंख्याकरणेऽपि संख्यावताम्—

योऽसौ कामविलासभाणजनितक्ष्यसाच्चिदद्वैतकं
जातं कौशलवीति काऽपि समभूच्चम्पूर्हनूमज्जयम् ।
काव्यं यत्प्रभवं वदन्ति कृतिनो येनोदितं राघव-
व्यायोगं च डिमो महेन्द्रविजयो यन्निर्मितो राजते ॥ इति

iv) [2]महेन्द्रविजयडिमप्रस्तावनायाम्—

मारिषः—(स्मरणमभिनीय)

---

[1] Mss. No. p. 2773/4, Mss. No. p. 2586/3
Mss. No. B. 192/6, O.R.I. Mysore.

[2] Mss. No. B. 192, Mss. No. p. 2773
O.R.I. Mysore.

ज्ञातम् । यस्य खलु निरर्गळानन्दरसप्रापकस्यापि रूपकस्य कवयिता नवनवोन्मेषसुषमाविशेषभूषणः प्रगल्भजनजेगीयमानमधुरमधुरसधोरणीबन्धुर-प्रबन्धनिर्वाहसाहसनिरातङ्कः श्रीवेङ्कामात्यनामा सुधीमणिः ।

सूत्रधारः—अथ किम्

कर्णाटरामायणकाव्यकर्ता
कविश्चिदद्वैतकृतेर्महान्यः ।
जगौ हनूमज्जयमाञ्जनेय-
शताभिधं कामविलासभाणम् ॥ अपि च

कुशलवचम्पूजनिकृत् कुक्षिम्भरभिक्षुप्रहसनाढ्यः ।
सीतापरिणयघटनाख्यातः षड्दर्शिनीनेता ॥ अपि च--

यश्च वामाम्बिकागर्भशुक्तिमुक्तामणिप्रथः ।
यं हम्पयार्यदुग्धाब्धिबन्धुमिदं प्रचक्षते ॥

v) अनेनैव कृते [1] 'जगन्नाथविजयमहाकाव्ये' प्रतिसर्गं समाप्तिवाक्ये एवं कथितमस्ति । तद्यथा—'इति श्रीमद्रामपुराधीशश्रीरघुनाथचरण-द्वन्द्वाराधनलब्धसम्पत्सारस्वतवैभवविश्वजनीनविद्यश्रीवेङ्कयार्यप्रधान – शिरोमणिविरचिते श्रीमति महाकाव्ये जगन्नाथविजये ....इति

vi) अस्मिन्नेव [2] उर्वशीसार्वभौमेहामृगे प्रस्तावनायाम्—

नटी—णादं णादं ।

---

[1] Mss. No. B, 2020, O.R.I., Mysore.

[2] Mss. No. p. 2586, Mss. No. p. 2773
O.R.I., Mysore.

जंस कइ कणाडरामाअणादिमहापबन्द-

णिमाणणिवुणो वेङ्कअंजोंति गिंजदि ॥

सूत्रधारः—साधु स्मृतं भवत्या ।

कथं गीर्वाणकर्णाटकान्ध्राद्यनेकभाषाकवयितुः प्रबन्धगणनावकाश-स्तस्य—

'योऽसौ कामविलासभाणतिलको यद्वा चिदद्वैतकं

शास्त्रं यश्च डिमो महेन्द्रविजयो यो रुक्मिणीमाधवः ।

अङ्कः किञ्च यदाञ्जनेयशतकं काव्यं हनूमज्जयं

यत्कुक्षिंभरभैक्षवं प्रहसनं तत्सर्वमेतत्कृतम् ॥ इति

एवं च एतैः प्रमाणैः अयं विषयः निश्चितो भवति । अयं च वेङ्कामात्यः संस्कृतकर्णाटकान्ध्रभाषासु प्रसिद्धः कविरासीत् । संस्कृत-भाषायां नाटक-प्रकरणरूपरूपकद्वयं विहाय शेषेषु भाणाद्यष्टप्रभेदेषु ग्रन्थाः अनेन सुनिबद्धाः । ते च—

I. रूपकप्रभेदाः—

i) 'कामविलासभाणः'

ii) 'कुक्षिंभरिभैक्षवप्रहसनम्'

iii) 'महेन्द्रविजयडिमः'

iv) 'वीरराघवव्यायोगः'

v) 'लक्ष्मीस्वयंवरसमवकारः'

vi) 'सीताकल्याणवीथी'

vii) 'रुक्मिणीमाधवाङ्कः'

viii) 'उर्वशीसार्वभौमेहामृगः'

II. संस्कृतभाषायां रचिताः अन्ये ग्रन्थाः—

i) 'जगन्नाथविजयम्—(महाकाव्यम्)

ii) 'कुशलवचम्पूः'—(चम्पूकाव्यम्)

iii) 'चिदद्वैतिका'—(अद्वैतपरो ग्रन्थः)

iv) 'आञ्जनेयशतकम्'—(स्तोत्रकाव्यम्)

v) 'अलङ्कारमणिदर्पणम्'—(अलङ्कारशास्त्रग्रन्थः)

vi) 'सुधाझरी'—(गद्यकाव्यम्)

अनेन न केवलं संस्कृतभाषायां, कर्णाटकभाषायामपि कृतयः विरचिताः इति ज्ञायते। 'सीताविवाहः' 'हनुमज्जयम्' 'कर्णाटक रामायणम्' इति कृतयः कर्णाटकभाषायां वर्तन्ते। तदुक्तम् अस्यैव 'कामविलासभाणप्रस्तावनायाम्'—

'यः श्रीरामपदारविन्दविहरद्भृङ्गायमाणामल—
स्वान्तश्रीपवनात्मजप्रसदनस्वाधीननानाकलः।
येनाकारि कवीन्द्रनन्दितरसं सीताविवाहाभिधं
काव्यं श्रीहनुमज्जयेन च समं कर्णाटरामायणम् इति।

अस्य कुलगोत्रादिविषयेऽपि तत्रैव कामविलासभाणेऽपि एवं निरूपितमस्ति—

विश्वानन्दिनि मौनभार्गवकुले दुग्धाम्बुधिप्रोज्वले
हम्पार्याभिधमन्त्रिणः समुदितो वाबाम्बिकागर्भजः।
आजन्मप्रथमानविलसत्सौशील्यसाम्राज्यभूः
वेङ्कप्पप्रभुरुन्नतो गुणगणैस्सोऽयं न केन श्रुतः॥ इति

अयं आन्ध्रभाषायामपि कविरासीदिति 'कथं गीर्वाणकर्णाट-कान्ध्राद्यनेकभाषाकवयितुः प्रबन्धगणनावकाशस्तस्य' इति उर्वशीसार्वभौमेहा-मृगस्य प्रस्तावनावाक्यादवगम्यते। परं ग्रन्थाः अद्यावधि नोपलब्धाः।

वेङ्कामात्यः श्रीरामस्य अनन्यः भक्तः आसीत्। एवमेव रामभक्तस्य हनूमतः पादसेवकोऽप्यासीत्। रामहनुमतोरनुग्रहेणैव कृतिरचनासामर्थ्यं लब्धवानिति तस्य ग्रन्थवाक्यैरेव ज्ञायते। तद्यथा—

i) सीताकल्याणवीथीप्रस्तावनायाम् —

अ) 'यः श्रीरामपुराधिनाथकरुणादैनन्दिनोज्जृम्भण-
प्राप्ताधीशदशश्चतुर्दशकलासाहित्यसाम्राज्यभूः।
यस्येयं दशरूपकप्रमवकृत् प्रज्ञारसज्ञादृता
यश्चौदार्यमुखानधत्त सुगुणानाचूलिकासम्भवात्॥

आ) नटी—(सानुस्मरणम्) आर्य एतस्य अञ्जनानन्दनप्रसादलब्ध एव कविताविलास इति श्रूयते।

सूत्रधारः—कस्सन्देहोऽत्र।
पवनात्मभवस्मृतिर्वचा नवनीतं रघुनाथसेवनम्।
शिशुतासमयेऽपि साहिती पयसस्तौल्यमवाप यत्कवेः॥ इति

ii) वीरराघवव्यायोगप्रस्तावनायाम्—

सूत्रधारः—आर्ये, किमलभ्यमाञ्जनेयद्वितीयावतारस्य तस्य? यदुच्यते पुराविद्भिः बुद्धिबलयशोधैर्यादिकमपि तत्सेवकानां तन्महिम्नैव लभ्यते इति।

एवमेतैः प्रमाणैः एषः श्रीरामस्य—आञ्जनेयस्य च अनन्यभक्तः इत्यवगम्यते। अत एव श्रीरामपरत्वेन हनुमत्परत्वेन च मङ्गलपद्यं कृतवानस्ति ग्रन्थकृदयम्। उदाहरणार्थमुच्यते—

i) सीताकल्याणवीथीमङ्गलाद्यद्वयमिदम्—

पातु श्रीरामचन्द्रः प्रणतजनततिप्रौढसम्पत्प्रदानः
प्राचुर्यौदार्यचर्यः प्रकटितसुरभूजातविख्यातसान्द्रः ।
यस्मिन् शृङ्गारलीलाकलिततनुलताभासमाने समाने
वश्या सीताभिधाना विनिहितहृदया प्राप सौख्यानि लक्ष्मीः ॥

वीरश्रीकुचकुङ्कुमाङ्कितमिव प्रायोऽरुणं यद्वपुः
सूराहारकलापि यद्विलसितस्थालीपुलाकायते ।
सीतानाथसनाथमञ्जुलहृदश्चिन्ताभिदस्तस्य नः
चेतः प्रीतिमुपैतु सेवनविधौ शाखामृगब्रह्मणः ॥

ii) वीरराघवव्यायोगस्य मङ्गलपद्यद्वयम्—

श्रेयः श्रीरघुनन्दनो वितरतादभ्रंशि योऽसौ बलात्
आदायेव समं परश्वधभृतश्चापेन रूपं मुनेः ।
लोकानामवनाय संभृततपोवेषो वधे रक्षसा-
मातेने खरदूषणादिकवधप्रस्तावनां नाटके ॥

भिन्दन् प्रासादकोटीभिदुरनखमुखैः पाणिजाग्रन्नखाग्रैः
भिन्दन्नुद्यानवाटीतरुवरविटपानद्भुतोदन्तदन्तैः ।
हुंकारेणैव रक्षस्समुदयमभितः त्रासयन् वीततन्द्रो
लङ्कातङ्कोपदेष्टा स जयति कबलत्पङ्कजास्यः कपीन्द्रः ॥

इत्थमेव सर्वत्र कृतिषु मङ्गलपद्येषु रामं हनुमन्तं च भक्त्या स्तौति ।

## ग्रन्थकर्तुः देशकालादिविषयः

कर्णाटकराज्ये मैसूरुनगरं बहोः कालात् प्रथितमस्ति । तत्र अनेके यदुवंशराजानः राज्यभारं चक्रुः । इतिहासे मैसूरुनगरस्यापि एकं विशिष्टं स्थानमस्ति । श्री इम्मडिकृष्णराजओडेयर् (क्रि श. १७३४-१७६६ श्री नञ्जराजओडेयर् (क्रि. श. १७६६-१७७०), श्री बेट्टद्चामराज-ओडेयर् (१७७०-१७७६) इत्येते राजानः मैसूरुसंस्थानस्य राजानः आसन् । एतस्मिन् समये अयं वेङ्कामात्यः मन्त्री आसीत् । हैदरालि-सन्निधेऽपि (क्रि. श. १७६३-१७८०) एषः प्रधानमन्त्री अभवत् । अतीव धीमानसौ न केवलं राजकार्येषु कुशलः परं काव्यनिर्माणेऽपि चतुरः आसीत् । संस्कृत-कन्नड आन्ध्रभाषासु प्रसिद्धः विद्वानयं अनेकाः कृतीः* रचयामासेति ज्ञायते । सङ्गीते चित्रकलायां च अतीवासक्तिरस्येत्यपि अवगम्यते ।

क्रिस्तशक अष्टादशशताब्द्या मैसूरुसंस्थानस्य इतिहासे वेङ्कप्पय्यस्य पात्रं विशिष्टतमम् । अस्य जन्मस्थानं 'रामपुरम्' इति कश्चन ग्रामः ।

---

* Like Vatsaraja, Pradhani Venkatabhupathi of Mysore wrote plays of different species, Rukmini-svayamvara (anka), Kukshimbharabhaikhsava (prahasana), Kamakalavilasa (bhana), Urvasisarva-bhouma (Ihamruga), Vibudhadanava (Samavakara) Viraraghavavijaya (vyayoga), Sitakalyana (vithi), and on Poetics Alankaramanidarpana.

(History of classical Sanskrit literature. by M. Krishnamachari page 705)

अस्य ग्रामस्य नाम तस्य सर्वासु कृतिषु उद्धृतमस्ति। मैसूरनगरस्य समीपे नैऋत्यभागे चट्टनहळ्ळिनामकग्रामः कपिलानद्याः तीरे वर्तते। तस्य ग्रामस्य समीपे रामपुरग्रामः विद्यते।

वेङ्कप्पय्यः अतीवक्लिष्टपरिस्थितौ जीवितवान् इति ज्ञायते। तस्य सांसारिकसन्निवेशाः न सुखदायिनः आसन्। राजसौधस्य परिस्थितिः परिपूर्णतया षड्यन्त्रव्यूहे अवर्तत। राजानः न बलिष्ठाः। अधिकारः एकस्यापि हस्ते न स्थिरः अभवत्। तत्समये कळलेनञ्जराजः अतीव प्रभावशाली पुरुषः। स तावत् द्वितीयकृष्णराजप्रभोः श्वशुरः। नञ्जराजः चतुरः शासकः इति प्रथितः। तत्काले स सर्वाधिकारी नञ्जराजः इत्येव प्रसिद्धः। वस्तुतः सः धनसचिवालये करसचिवालये च अधिकारी। अथापि सः अन्येषु विभागेष्वपि स्वीयप्रभावं विस्तारयति स्म। सैन्यं स्वीयमुष्टौ स्वीकर्तुं प्रायतत। तन्न सिद्धम्। यतः सर्वं सैन्यं हैदरालिवशे आसीत्। सेनाविभागे हैदरालिः अतीव प्रभावशाली व्यक्तिरभवत्। अयं हैदरालिः शीघ्रातिशीघ्रं स्वीयप्रभावं वर्धयित्वा नञ्जराजं तस्य स्थानात् प्रच्यावयितुं समर्थो बभूव।

मैसूरुसंस्थानस्योपरि अन्येषां संस्थानानाम् आक्रमणादिकं वर्तत एव आसीत्। महाराष्ट्रियाः अस्योपरि आक्रमणं कुर्वन्तः आसन्। एतस्मिन् समये वेङ्कप्पय्यः मैसूरुसंस्थानस्य परतः प्रविश्य तान् सर्वान् स्थगयितुं समर्थोऽभवत्।

वेङ्कप्पय्यः प्रथमतः मैसूरुराज्ञां प्रीतिं संपादयितुं प्रायतत। अस्य राजकीयप्रवेशकाले कळलेनञ्जराजः, हैदरालिश्च द्वावपि प्रभावशालिनावास्ताम्।

द्वितीयः कृष्णराजओडेयर् भूपतिः क्रि. श. १७३४ तमे वर्षे यदा राज्यस्य सिंहासनमारुरोह तदा वेङ्कप्पय्यः 'प्रधान' इति स्थाने निर्देशितोऽभूत्। षड्वर्षपर्यन्तं स्वीयबुद्धिमत्तया स्वशक्त्या च राज्यशासने स्वीयाधिकारं प्रचालयामास। नञ्जराजः कृष्णभूपतिस्थानमेवाक्रमितुं सन्नद्धः। तत्समये वेङ्कप्पय्यः कृष्णराजनृपस्य पक्षमादृत्य साहाय्यं प्रादात्। परमेतत् वेङ्कार्यस्य साहाय्यं न चकार। यतः तत्काले हैदरालिः अत्यन्तप्रभावशाली सेनानायकः। एवमेव तस्य स्थानं वेङ्कार्यस्य प्रधानस्थानादपि उन्नतमभवत्। यदा नञ्जराजओडोयर् सिंहासनमारुरोह तदा वेङ्कप्पय्यस्य स्थानं सुरक्षितमभूत्। सेनाविभागमेकं विहाय अन्येषु सर्वेषु विभागेषु अधिकारं निर्व्यूढवान्।

प्रथमतः वेङ्कप्पय्यः प्रधानीवेङ्कप्पय्यः इति प्रथितः अभवत्। यतः सः अमात्यकुलादेव जन्म लेभे। अस्य पिता हम्पेयामात्यः। अमात्यपदं तस्य वंशस्य नामेति ज्ञायते। तस्य पूर्वजाः विद्वांसो भूत्वापि राजकार्यनिरताः आसन् इति विशेषः। एषः अरुवेलिनियोगिब्राह्मणः। जन्मतः एव असौ धीमान्। राजकीयविषयेषु कुशली च। क्रि. श. १७१७ समये राज्ञीवीरम्माजी बिदनूरुनगरं शाससि स्म। तदा अयं वेङ्कामात्यः तस्याः समीपे राजप्रतिनिधिरूपेण सेवां प्रविवेश। कतिपयकालानन्तरम् अमुं वेङ्कामात्यं सा वीरम्माजी 'होसंगडिनगरं' प्रति प्रेषितवती। प्रदेशोऽयमधुना दक्षिणकन्नडजिल्लाविभागे वर्तते।

तत्र बिदनूरुनगरे सप्तवर्षपर्यन्तमयं शासनमकरोत्। तस्य शासनसामर्थ्यं परिगण्य राज्ञी दिवानकार्यालये अमुं प्रति प्रधानः इति उन्नतां पदवीं प्रादात्। राजकार्येषु अस्य सेवा प्रथमतः राज्ञ्याः वीरम्मायाः समीपे एव अभवत्। अस्मिन् समये एवाऽसौ संस्कृतस्य कृतीनां रचनाकार्ये निरतः आसीत्।

शासनशौण्डं राजकार्यकुशलममुं दृष्ट्वा हैदरालिः आकर्षितस्सन् स्वीयं श्रीरङ्गपत्तनं प्रत्याहूय प्रधानपदवीं दत्वा संमानयामास। हैदरालेः प्रार्थनायाः कारणात् विदनूरुशासनकार्यमपि वेङ्कामात्यः स्वीचकार। एतत्समये राज्यस्य अभिवृद्ध्यर्थं प्रजानां रक्षणादिकार्यविषयेषु च संपूर्णं समयं विनियुज्य प्रजानां प्रीतिं संपादयामास। राज्यस्य अर्थार्जनविषये नूतनार्थ-व्यवस्थां प्रकल्प्य आर्थिकक्षेत्रं वर्धयामास। धनस्य अपव्ययादिकमपि दूरीचकार। राज्यस्य वाणिज्यव्यवस्थायामपि महत्त्वपूर्णं परिवर्तनमकरोत्। मैसूरुसंस्थाने तिम्मप्पः इति कश्चन राजप्रतिनिधिः अवर्तत। तेन धनस्य दुर्विनियोगः कृतः इति ससाक्षिकमन्विष्य राज्ञे न्यवेदयत्। एतेन तस्य नैजं सामार्थ्यं बहिः प्रकाशितम्।

अयं च सन्धिकार्यचतुरोऽपि। एतेन कारणेन क्रि.श १७७४ तमे वर्षे हैदरालिः मराठाधिपेन रघुनाथरावेण सार्धं सन्धिं समुत्पादयितुं पूनानगरं प्रति वेङ्कामात्यममुं प्रेषयामास। कार्यमिदमसौ सम्यक् साधितवान्। एवमेव क्रि. श. १७७० तमे वर्षे कर्णाटकराज्यस्य हासन-बेलूरु-तथान्येषां संस्थानानां पाळेगाराणां (दण्डनायकानां) दमनकार्यं सम्यक् साधयामास। क्रि. श. १७७१ तमे वर्षे कर्णाटकस्य मेलुकोटे समीपे मराठैस्सह नियुध्य नृपं टिप्पूं प्रति मैसूरुसंस्थानं यथावत् संपादयामासेत्यपि ज्ञायते।

वेङ्कामात्यः स्वीयजीवितस्य अन्तिमदिवसेषु सुखी नासीत्। दुःखी एवाऽभवत्। तानि दिनानि तु तस्य दुःखदायकानि। अयं वेङ्कामात्यः परमया निष्ठया हैदरालेः सेवां यद्यप्यकरोत् तथापि सः हैदरालिः पिशु-नजनानां वचनमनुसृत्य अस्मिन् असन्तुष्टो बभूव। अधिकारसमये असौ धनादिविषये स्वाधिकारं दुर्विनियोगं चकारेति मिथ्यापवादं तदुपरि समारोप्य तं प्रधानसचिवस्थानात् निष्कास्य बन्धनागारं प्रेषयामास। परं तत्पश्चात् सः निरपराधी इति हैदरालिः अजानात्। सद्य एव तं बन्धनागारात्

मोचयामास । ततः केवलप्रधानबिरुदभाजे तस्मै सः हैदरालिः प्रतिमासं एकसहस्ररूप्यकपरिमितं वेतनं प्रदास्यन् ररक्ष । क्रि श १७८३ तमे वर्षे वेङ्कामात्यः मधुमेहरोगेण पीडितस्सन् दिवंगतः ।

श्री सि. हयवदनरावेण विरचिते History of Mysore[1] इत्याख्ये पुस्तके, श्री एम् पि. एल्. शास्त्रिणा लिखिते Pradhana Venkappaiah—Poet and Play-wright[2] इत्यस्मिन् लेखने च श्रीवेङ्कामात्यस्योपरि बह्वो विषयाः निरूपिताः । विशेषविषयाः तत्रैव द्रष्टव्याः । विषयप्रकाशनदृष्ट्या अनयोः ग्रन्थयोः उद्धृतः केचन ग्रन्थभागाः अस्य ग्रन्थस्य अनुबन्धभागे प्रदत्ताः ।

## वेङ्कामात्यस्य शैली

वेङ्कामात्यः अनेकेषु शास्त्रेषु निष्णातः आसीत् इति तस्य ग्रन्थावलोकनेन ज्ञायते । विशेषतः रूपकप्रबन्धेषु कथावस्तुसंविधाने पात्रचित्रणे,

---

1. History of Mysore, (1704 1766 A.D.) Volume-II
By C. Hayavadana Rao, Chapter—XIII
Krishnaraja Wodeyar —II
Printed at the Government Press,
Bangalore-1946
(Page Nos. From 476 to 482)

2. 'Pradhana Venkappaiah—Poet and Play write'
By M. P. L. Sastry, M.A.
Published in the Quarterly Journal
of the mythic Society vol. XXXI July 1940
Bangalore. (Pages 36 to 52)

वर्णनसन्दर्भे, अलङ्कारसङ्घटनायां, विविधेषु वृत्तेषु पद्यरचनायां च कुशलः इत्यवगम्यते। काव्यनिर्माणेऽपि सिद्धहस्तोऽयम्। लक्ष्मीस्वयंवरसमवकारस्य 'विबुधदानवसमवकारः' इति नामान्तरमप्यस्ति। 'सुधाझरी' गद्यग्रन्थः। अयं ग्रन्थः बाणस्य 'कादम्बरीं' स्मारयति। 'अलङ्कारमणिदर्पणम्' इति ग्रन्थः अलङ्कारशास्त्रस्य लाक्षणिकग्रन्थः। काव्यसम्बन्धिनः अनेके विचाराः अत्र निरूपिताः। 'जगन्नाथविजयम्' एकं महाकाव्यम्। व्याकरणशास्त्रस्य अपूर्वशब्दानाम्, उदाहरणानां च प्रयोगाः अत्र विद्यन्ते। काव्यमिदं भट्टिकाव्यं ज्ञापयति। कर्णाटकभाषायां-कर्णाटकरामायण-इन्दिराभ्युदय-रामाभ्युदय-हनुमद्विलासनामकग्रन्थाः मनोज्ञाः सन्ति। संस्कृते 'हनुमच्छतकम्' 'सूर्यशतकम्' इत्युभौ स्तोत्रग्रन्थौ मनोहारिणौ स्तः। विशेषतः अस्य शैली सुलभा मधुरा गभीरा च। राजकार्यनिरतोऽप्ययं साहित्यक्षेत्रे ग्रन्थान् रचयामासेति चित्रं प्रशंसार्हं च कार्यम्।

## संपादनसमये स्वीकृतयोः हस्तप्रत्योः परिचयः

अप्रकटितस्यास्य ईहामृगस्य संपादनसन्दर्भे द्वे हस्तप्रती अवलोकिते स्तः। उभे एव हस्तप्रती वर्तेते। उभेऽपि मैसूरुप्राच्यविद्यासंशोधनालये (Oriental Research Institute) लभ्येते। अन्यत्र यत्र कुत्रापि अस्य उर्वशीसार्वभौमेहामृगस्य हस्तप्रतयः नोपलभ्यन्ते। एते द्वे प्रती अवलोक्य ग्रन्थोऽयं सम्यक् संपादितः।

# TABLE OF MANUSCRIPTS CONSULTED

| | | | |
|---|---|---|---|
| 1 | Manuscript Numbers | P. 2589 | P. 2773 |
| 2 | Meterial of the manuscripts | Palm leaf | Palm leaf |
| 3 | Script | Kannada | Grantha |
| 4 | S'ze in Cms. | 35 × 5.5 | 34.8 × 3.8 |
| 5 | Leaves of pages | 1—99 | 119—149 |
| 6 | Lines in a page | 7 | 7 |
| 7 | Letters in a line | 45 | 52 |
| 8 | Complete or Incomplete | Complete | Complete |
| 9 | Condition | Good | Good |
| 10 | Place | O.R.I. Mysore | O.R.I. Mysore |
| 11 | Symble of the manuscripts | Ka. (क) | Ga. (ग) |

## संपादनकार्यस्य विशेषता

'कन्नडलिपिस्थहस्तप्रतेः 'क' इति ग्रन्थलिपिस्थहस्तप्रतेः 'ग' इति च सङ्केतः अत्र संपादनकर्मणि व्यवहृतः। संस्कृतभाषायां मयैव नूतनतया 'ललिता' नामिका टिप्पणी विरचिताऽस्ति। पाठान्तरादिकं प्रत्येकं टिप्पण्याः अधोभागे प्रदत्तमस्ति। पद्यानां भावानुवादोऽपि टिप्पण्यां लिखितः। विशिष्टसन्दर्भे वेद-शास्त्र-पुराणादिग्रन्थावलोकनेन अभिप्रायः संगृहीतः संकलितश्च विद्यते।

## कृतज्ञतासमर्पणम्

ग्रन्थस्यास्य संपादनवेलायां-ग्रन्थप्रकटणमार्गे च स्मरणीयमुपकारं कृतवद्भ्यः निर्देशकेभ्यः डा. आर्. एस्. शिवगणेशमूर्तिमहोदयेभ्यः, उप-निर्देशकेभ्यः विद्वद्भ्यः रामाचार्यसाळगिमहाभागेभ्यः, प्राक्तननिर्देशकेभ्यः डा.के. राजगोपालाचार्यमहाशयेभ्यः, समुचितं साहाय्यं सहकारं च दत्तवद्भ्यः सहृदयेभ्यो सहोद्योगिभ्यः विद्वद्भ्यः श्री हेच. शङ्करगणपति-फाटकेभ्यः तथा विद्वद्भ्यः श्री एच्. वि. नागराजरावमहोदयेभ्यश्च मदीयाः कृतज्ञताः अर्पयामि। विश्वविद्यानिलयस्य मुद्रणालयविभागस्य वयस्यः श्री नरसिंगरावदेसायिमहाभागः ग्रन्थस्यास्य मुद्रणविषये बहूपकारं प्रादात्। तं प्रति कृतज्ञतां समर्पये। ग्रन्थमिमं सुन्दरं मुद्रितवद्भ्यां गुरुवर्यमुद्रणालयस्य श्रीमती शशिमूर्ति श्री टि. के. एल. मूर्तिमहाभागाभ्यां

कृतज्ञतां समर्पयामि । इदंप्रथमतया लोकं प्रति प्रकटितमिदं रूपकं सज्जनाः सहृदयाः विद्वांसः संस्कृतानुरागिणश्च सानुरागं स्वीकुर्वन्त्विति प्रार्थये ।

इति

सहृदयविधेयः

'प्रतिभापट्टः' वेदसूक्तविद्यासागरः',

**टि. वि. सत्यनारायणः**

अलङ्कारव्याकरणशास्त्रविद्वान्,

संस्कृत एम्. ए., संस्कृतकोविदः

सहायकसंशोधकः, प्राच्यविद्यासंशोधनालयः,

मैसूरु



श्रीः

॥ शुभमस्तु ॥

श्रीवेङ्कामात्यविरचितः

# [1]उर्वशीसार्वभौमेहामृगः

(सम्पादककृतटिप्पण्या समलङ्कृतः)

**जयति पतिरखिलजगतां जलदद्युतिरेष दशमुखारातिः ।**
**वशमेत्य यस्य कीर्तिर्वासकसज्जेव जगदलञ्चक्रे ॥ १ ॥**

---

टिप्पणी—(i) उर्वशीति । रूपकप्रभेदस्य नाम—'उर्वशीसार्वभौमेहामृगः' इति । उर्वशी अप्सरस्स्त्री । पुरूरवाः नाम राजा सार्वभौमशब्देन ग्राह्यः । 'उरून् महतोऽपि अश्नुते व्याप्नोति वशीकरोतीति यावत् । यद्वा उरुं नारायणस्य महर्षेः उरुप्रदेशमश्नुते योनित्वेन व्याप्नोतीति । उरु+अश्+क । गौरादित्वात् ङीष् । मनीषादित्वात् ह्रस्वादिः । इति शब्दकल्पद्रुमे व्युत्पत्तिः प्रदर्शिता । 'उरून् अश्नुते वशीकरोति इत्युर्वशी । उरु + अश् + क । गौरादित्वात् ङीष् । पृषोदरादित्वात् ह्रस्वः' इति वाचस्पत्ये ।

'उर्वशी च सार्वभौमश्च उर्वशीसार्वभौमौ । तयोः ईहामृगः उर्वशीसार्वभौमेहामृगः इति विग्रहः । उर्वशीसार्वभौमसम्बन्धी ईहामृगः इति फलितोऽर्थः ।

(ii) दशरूपके तु ईहामृगः एकः प्रभेदः । तदुक्तं दशरूपके—

'नाटकं सप्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति ॥ (१-८)

---

[1] 'क' प्रतौ 'उर्वशीसार्वभौमाख्येहामृगः' इति, 'ग' प्रतौ 'उर्वशीसार्वभौमनामेहामृगः' इति च दृश्यते

टिप्पणी—तत्र ईहामृगलक्षणमप्येवं निरूपितमस्ति—

मिश्रमीहामृगे वृत्तं चतुरङ्कं त्रिसन्धिकम् ।
नरदिव्यावनियमान्नायकप्रतिनायकौ ॥
ख्यातौ धीरोद्धतावन्त्यो विपर्यासादयुक्तकृत् ।
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ॥
शृङ्गाराभासमप्यस्य किञ्चित् किञ्चित् प्रदर्शयेत् ।
संरंभं परमानीय युद्धं व्याजान्निवारयेत् ॥
वधप्राप्तस्य कुर्वीत वधं नैव महात्मनः ॥

(द- रू॰ ३–७२, ७५)

मृगवदलभ्यां नायिकां नायकः अस्मिन् ईहते इति ईहामृगः । ख्याताख्यातं वस्तु । अन्त्यः प्रतिनायकः । विपर्यासात् विपर्ययज्ञानात् अयुक्तकारी विधेयः इति प्रतापरुद्रीयरत्नापणव्याख्याने एवमुक्तम् । गर्भावमर्शरहितास्त्रयः सन्धयो यस्मिन् तत् त्रिसन्धिकम् । आभासरसयोरनुरागशून्यनायिकानुरक्तत्वादिति भावः । अत एवोक्तं दशरूपके—

'दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः' इति । अवधं युद्धमजायुद्धकल्पमित्यर्थः इति । प्रकृतलक्षणानुसारेण अत्र राजा पुरूरवाः अदिव्यनायकः । देवाधिपः इन्द्रः प्रतिनायकः । उभावपि धीरोद्धतौ । उभयोरपि दिव्यनायिकायामुर्वश्यामभिलाषः । साऽपि इन्द्रं विहाय राजानमेवेच्छति । मध्ये इन्द्रः अन्तरायरूपेणागत्य राजवेषेण तामपहर्तुमपि सन्नद्धो भवति । ततः उभयोः उर्वशीकृते युद्धस्सञ्जायते । अन्ते मुनिः आगत्य एतयोर्युद्धं निवारयति । उर्वशी राजानं परिणेतुमभिलषति । तत्पश्चात् अनयोः परिणयेण कल्याणं भवति इति विषयोऽनुसन्धेयः । अनिच्छन्तीमुर्वशीं सुरेन्द्रः ईहते । तस्यां स्वकीयां रतिं प्रकटयति इति शृङ्गाराभासः

टिप्पणी—अत्र दृश्यते। पुरुरवा अपि दिव्याम् अप्सरस्त्रियमुर्वशीं मृगवत् ईहते इति 'उर्वशीसार्वभौमेहामृग' इति नामधेयमित्यप्यंशः अवगन्तव्यः।

(iii) **जयतिपतिरिति**—श्रीरामचन्द्रपरं मङ्गलपद्यमिदम्। अत्र रामचन्द्रपराक्रमो वर्णितः। श्रीरामः मेघश्यामः सर्वजगत्पतिः, रावणारिश्च। रामपराक्रमं निशाम्य कीर्तिकामिनी स्वयमेव तस्य वशंगता। सा तु तत्कृते वासकसज्जेव कृत्स्नं जगत् भूषयामास। अत्र राम एव नायकः। कीर्तिरेव नायिका। सा वासकसज्जानायिकेव कल्पिता। यद्यपि श्रीरामः एकपत्नीव्रतस्थः। तस्येयं कथं नायिका भवतीति सन्देहः। अत एवोक्तं कीर्तिः कामिनीरूपेण कल्पिता इति। एतेन दोषपरिहारः। "मुदा वासकसज्जा स्वं मण्डयत्येष्यति प्रिये" (दशरूपकम् २-२४) इति वासकसज्जानायिकालक्षणम्। सेत्र कीर्तिरपि प्रिये रामे जगत्पतौ सति समस्तं जगदलञ्चक्रे इत्युक्तम्। अर्थात् सर्वत्र श्रीरामपराक्रमविषयिणी कीर्तिः व्याप्ता इति तात्पर्यम्। अस्मिन् पद्ये पुरूरवसः पराक्रमोऽपि व्यज्यते। सुररिपून् असुरान् जित्वा देवान् प्रति साहाय्यं कृत्वा रराज राजा पुरूरवाः। तस्मिन् उर्वशी स्वयमनुरक्ता भवति। सोऽपि तस्यामनुरक्तस्सन् मध्ये आगतमन्तरायरूपिणं देवेन्द्रमपि जित्वा तां पर्यणैषीत् इत्ययं कथावृत्तान्तोऽपि अत्र सूचितः।

इयमर्थपरा नान्दी। नान्दीस्वरूपं प्रतापरुद्रीये उक्तम्—

"अर्थतः शब्दतो वाऽपि मनाक् काव्यार्थसूचनम्।
यत्राष्टभिर्द्वादशभिरष्टादशभिरेव वा॥
द्वाविंशत्या पदैर्वाऽपि सा नान्दी परिकीर्त्यते॥"
(ना॰ प्र॰ ३४)

नाटकादिरूपकाणामादौ विहितं पद्यं नान्दीत्युच्यते॥

दशास्यतेजोबलकान्दिशीकता-
दशाकृतौ येन चपेटमुद्रिका ।
[1] भृतारिविद्रावणमुद्रिकाञ्जसा
[2] ह्यभूत्कलौसोऽवतु वीरवानरः ॥ २ ॥

टिप्पणी—चन्द्रनामाङ्कितप्रायो मङ्गलार्थपदोज्वला ।
आशीर्नमस्क्रिया वस्तुनिर्देशो वा प्रकल्प्यते ॥

(प्रतापरुद्रीयरत्नापणव्याख्याने ना॰ प्र॰)

इत्यादिविशेषोऽप्यत्र द्रष्टव्यः । पद्यमिदं मात्राछन्दसि गीतिवृत्तम् ॥ आर्यावृत्तस्य पूर्वार्धलक्षणमुभयोर्दलयोर्यदि भवति तदा गीतिवृत्तमिति नियमः । तदुक्तम् — 'आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः । दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः ॥' इति।-

(वृत्त॰ र॰ २ अ)

आर्यापूर्वार्धलक्षणं तु—

'लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं न लघू वा प्रथमेऽर्धे नियतमार्यायाः ॥' इति—

(वृत्त॰ र॰ २ अ)

अत्र पद्ये — मात्रचतुष्कसप्तगणाः गोपेताः उभयोर्दलयोरपि भवंतीति गीतिवृत्तं भवति ।

दशास्येति — द्वितीयं नान्दीपद्यमिदं हनुमत्परम् । अत्राऽपि हनुमतः पराक्रमः व्यङ्ग्यतया भासते । दशास्यस्य रावणस्य

[1] 'भृतापि विद्रावणमुद्रिकाम्भसाम्' इत्यपपाठः 'क' प्रतौ दृश्यते ।

[2] क॰ ग–प्रतिद्वयेऽपि 'अभूत्कलौ' इति पाठः अस्ति । तदा 'अञ्जसा अभूत् इत्यनयोः सन्धिर्भूत्वा 'अञ्जसाऽभूत्' इति भवति । एवं कृते छन्दोभङ्गः भवतीति "ह्यभूत्" इति पाठः संशोधितः ।

(नाद्यन्ते *सूत्रधारः)

([1] पुरो विलोक्य, सहर्षम्)—[2] अमी किल निखिलजगदवनकलाधुरन्धरनिरुदाङ्कवृत्तिप्रतीतकल्याणगुणवृन्दस्य सावयवानन्दस्य निजकथासुधारसास्वादमुदितद्रुहिणादिविबुधमण्डलस्य

---

टिप्पणी— तेजोबलयोः कान्दिशीकतादशाकरणे येन हनुमता, भृता-धृता चपेटमुद्रिका अञ्जसा झटिति कलौ कलियुगे अरिविद्रावणमुद्रिका शत्रुदूरी-करणमुद्रिका अभूत्। तद्विशिष्टः वीरवानरः हनुमान् अस्मान् पात्वित्यर्थः। रामरावणयोर्युद्धसमये अस्य चपेटमुद्रिका रावणस्य तेजोबलदूरीकरणे समर्था बभूव, सैव अधुना कलियुगे शत्रुनिवारणमुद्रिकाऽभवत्। अद्याऽपि जनाः भीत्यादिनिवारणार्थं हनुमद्यन्त्रादिकं धारयन्ति इति सर्वविदितम्। तस्य विग्रहेऽपि सर्वत्र चपेटमुद्रिका दृश्यत एव। चपेटशब्दः अत्र पुल्लिङ्गे वर्तते। चपतीति चपः। चपः—सान्त्वना, चूर्णीकरणं वा। 'नन्दि-ग्रहिपचादिभ्यो ल्युणिन्यचः' (३-१-१३४) इति अच्। चपाय एटति गच्छतीति चपेटः। इट गतौ इति धातोः 'इगुपधज्ञाप्रीकिरः कः (३-१-१३५) इति 'क' प्रत्ययः। चपेट एव मुद्रिका चपेटमुद्रिका इति रूपकसमासः। 'मयूरव्यंसकादयश्च' इत्यनुशासनम्। 'पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ' इति अमरकोषे पुल्लिङ्गे चपेटशब्द अस्ति। 'खण्डिकोपाध्यायः शिष्याय चपेटां ददाति' इति व्याकरणभाष्य प्रयोगात् स्त्रीलिङ्गेऽप्यस्ति चपेटशब्दः। जतौ तु वंशस्थमुदीरितं जरौ (वृत्तर-३ अ) इत्यनुशासनात् जगतीछन्दसि वंशस्थवृत्तम्।

*सूत्रधारः द्विविधः। तत्र प्रथमः सूत्रधारः नान्द्याः प्राक् पूर्वरङ्गं नाम कर्मविशेषं देवतास्तुतिं च कृत्वा गच्छति। ततः द्वितीयः सूत्रधारः नाद्यन्ते काव्यार्थं स्थापयति। अत एव अस्य स्थापकः इत्यपरं

---

[1] पुरोऽवलोक्य–ग [2] अमी किल जगदवन–ग

नामधेयम् । भासनाटकादौ 'नान्द्यन्ते सूत्रधारः' प्रविश्य काव्यार्थं स्थापयति । अयमेव क्रमः अत्राऽप्यनुसृतः । उक्तं च दशरूपके—

पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते ।
प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥

पूर्वं रज्यते अस्मिन्निति पूर्वरङ्गो नाट्यशाला । तत्स्थप्रथमप्रयोग-व्युत्थापनादौ पूर्वरङ्गता । तं विधाय प्रथमं सूत्रधारे विनिर्गते तद्वदेव वैष्णवस्थानकादिना प्रविश्य अन्यो नटः काव्यार्थं स्थापयेत् ।

स च काव्यार्थस्थापनात् सूचनात् स्थापकः ॥
दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः ।
सूचयेद्वस्तु बीजं वा मुखं पात्रमथाऽपि वा ॥

सः स्थापकः दिव्यं वस्तु दिव्यो भूत्वा मर्त्यं च मर्त्यरूपो भूत्वा मिश्रं च दिव्यमर्त्ययोरन्यतरो भूत्वा सूचयेत् । वस्तु-बीजं मुखं पात्रं वा ।

(दशरूपकम्-३-१,२,३)

प्रतापरुद्रीयरत्नापणव्याख्याने नाटकप्रकरणेऽप्युक्तम्—पूर्वरङ्गं नाम नाटकादौ कर्तव्यः प्रत्यूहपरिपन्थी कर्मविशेषः ।

तदुक्तम्—

यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स कीर्तितः ॥ इति ।

तस्य प्रत्याहारादीनि द्वाविंशतिरङ्गानि, तन्मध्ये अवश्यं कर्तव्या नान्दी । तदुक्तं बादरायणेन—

यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ।
तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥

[1] अपदानताखण्डलस्य शरणागतरक्षासवनदीक्षानिरपायसहायित-जनकतनयापरिरम्भसम्भृतामोदहृदः, विधूतविभीषणादिविपदः, कलि-कल्मषवियोजनप्रयोजनाङ्गीकृत[2] श्रीरामपुरविलासावासस्य [3] श्रीनिवासस्य कृपाशरधेः दाशरथेः वसन्तोत्सवोत्सुकविलोकनकुतुकितमनोरथ-विस्ताराः, निरवद्य[4] विद्यावैशद्यविद्योतमानस्वकसुवृत्तप्रस्ताराः सरस-सभास्ताराः !

टिप्पणी—नान्द्यन्तरं सूत्रधारेण द्वितीयेन रङ्गप्रसाधनं नाम सभापतावुपविष्टे रङ्गप्रविष्टसाम्प्रदायिकसम्पादितो यवनिकापगमाविर्भूतपात्रविशेषप्रकीर्ण-पुष्पाञ्जलिपरिष्कृतो नृत्तगीतवाद्यविशेषप्रयोगः केवलगीतवाद्यविशेषप्रयोगो गीतादेरेकैकशः प्रयोगो वा। भारतीवृत्त्याश्रयणेन श्लोकैः काव्यार्थः सूचनीयः। एतच्च—

सङ्गीतज्ञैर्बुधैः सार्धं नायके प्रेक्षके स्थिते।
प्रविश्य रङ्गभूमिं ते तिष्ठन्तः साम्प्रदायिकाः॥ इत्यादिना सङ्गीतरत्नाकरे प्रपञ्चितम् इति।

(प्रतापरुद्रीयस्य रत्नापणव्याख्याने नाटकप्रकरणे उद्धृतोऽयं भागः)

अत्र सूत्रधारो द्विविधः इति प्रागेवोक्तम्। पूर्वरङ्गविधायकः प्रथमः। इतरस्तु नटस्थापकाद्यपरपर्यायः पूर्वसूत्रधारसदृशगुणाकृतिः प्रस्तावनाप्रवर्तकः। अत्र तु नटीमारिषादिसंभाषणादयमेव विवक्षितः। यद्यपि अपरः सूत्रधारः नान्द्यन्ते काव्यार्थं स्थापयतीत्युक्तम्। अथाऽपि सूत्रधारस्थापकयोर्मध्ये विद्यमानो भेदः स्पष्टं न भासते। सामान्यतः कुत्राऽपि रूपकेषु द्वितीयसूत्रधारस्य 'स्थापकः' इति न सूचितः। सूत्रधार एव काव्यार्थं स्थापयति। अत्र विषये विशेषतया विचारः कर्तव्य एव।

[1] अपदनता–ग
[2] 'श्रीरामपुरीविलासावासस्य–ग
[3] 'श्रीनिवासस्य'–इति पदं 'ग' प्रतौ नास्ति।
[4] विद्यावैशद्यस्वकसुवृत्तप्रस्ताराः–क

तदेनामुपसृत्य किमपि तदीयहृदयप्रमोदनिरूपकं रूपकमभिनीय कृतार्थयाम्यात्मानम्

(इति कतिचित्पदानि गत्वा, *आकाशे कर्णं दत्वा)

भोः भोः सभासदः किं ब्रूथ ?
अलमन्यकथालापैरनुरूपेतरैर्मतैः ।
इह प्रवर्ततेऽस्माकम् ईहामृगविलोकने ॥ ३ ॥ इति

(सामोदम् )

अहो महाननुग्रहो हि विधेरनुग्रहः ।
यदद्य सामाजिकवचनसंवादी मदीयमनोरथः ।
तद्गृहिणीमाहूय तादृशरूपकाभिनये नियोजयिष्यामि ।

(इति नेपथ्याभिमुखो भूत्वा)

---

टिप्पणी—(i) सरससभास्तारा:—रसिकाः सभासदः इत्यर्थः । रसिकप्रेक्षका:इति यावत् । "सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते "

(अमरकोशः—ब्रह्मवर्गः)

(ii) रूपकम्— नटे रामाद्यवस्थारोपेण वर्तमानत्वात् रूपकम् । रसानाश्रित्य वर्तमानं तत् नाटकादिभेदेन दशधैव । तदुक्तम्—

अवस्थानुकृतिर्नाट्यं रूपं दृश्यतयोच्यते ।
रूपकं तत्समारोपात् दशधैव रसाश्रयम् ॥
नाटकं सप्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति ॥

(दशरूपकम्—१-७,८)

*(i) आकाशभाषणम् — पुरोवर्तिन्याः कथाप्रस्तावनायाः आनुकूल्यार्थं रूपकेषु अनुसृतमार्गेषु 'आकाशभाषणम्' एकम् । अत्र एक एव बिना पात्रं, बिना वचनं च सल्लपति । तल्लक्षणमुक्तम्—

आर्ये इतस्तावत्

**नटी**— [1]भो एसिह्मि । को णिओओ ।

(भोः एषाऽस्मि ! को नियोगः)

**सूत्रधारः**—न श्रुतो भवत्या सामाजिकादेशः ।

**नटी**— सचिन्ताश्वासम्) सुदो सुदो (श्रुतः श्रुतः)

**सूत्रधारः** कथमतीव प्रसीदति रसिकसदसि, पदं चिन्तायाः, भवति ।

**नटी**—अंधि किल भइणी मणोरंजणी णाम । [2]तं अणुरूव इति कळा-ळावं आनीय पदाणपअंतणं किदं ।

(अस्ति किल भगिनी मनोरञ्जनी नाम । [3]ताम् अनुरूप इति कलालापमानीय प्रदानप्रयत्नः कृतः)

**सूत्रधारः**—किं जातमत्र ।

**नटी** माआवि णाम कोंवि कुशीळवो [4]आअंचिअ तां अवहरिदुं उवकंदो ।

(मायाविनाम कोऽपि कुशीलवः आगत्य तामपहर्तुम् उपक्रान्तः ।)

**सूत्रधारः**—(सहासम्) कथमेतावतैव क्रान्तचित्तासि । नन्वयं कलालापः

---

टिप्पणी—'किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् ।
श्रुत्वेवानुक्तमप्येकस्तत्स्यादाकाशभाषितम् ॥' इति ।
(दशरूपकम्—१-६७)

(ii) सामाजिकवचनसंवादी । संवाद :—एकाभिप्रायः, ऐकमत्यं वा इत्यर्थः । सदृशः इत्यपि अस्यार्थः । संवादः अस्यास्तीति संवादी । "अतः इनिठनौ" (५-२-११५) इति इनि प्रत्ययः । सामाजिकानां वचनानि, सामाजिकवचनानि । तः संवादी सामाजिकवचनसंवादी इति ।

---

1 'भो' इति पदं ग प्रतौ नास्ति

2 अणुरुव्व इति–क 3 तमनुरूप–तदनुरूप–इति 'ग' प्रतौ पाठद्वयं दृश्यते ।

4 आअंपिअ वोहरिदुं वक्कंदो–क

[i] प्रतापखनिर्वर्तते । विजित्य तं स्वीयकलाविलासैः [ii] विधूय दुष्कीर्तिवितानमेषः कुशीलवानां कुशलं स्वकानां दिशन् विवाहोत्सवमेत्यमुष्याः ।

**नटी** –तह जदि पमोदबलिअहिअअम्हि ।
(तथा यदि प्रमोदभरितहृदयाऽस्मि)

**सूत्रधारः**—तदभिनीयतामेष सामाजिकादिष्टो रूपकविशेषः ।

**नटी**—को णु सो । (को नु सः)

[1] **सूत्रधारः**—(अलमन्यत्कथालापैरित्यादि [2] पुनः पठति)

**नटी**--अं अ ! कुदो एसो ईहामिअविलोअणं पअंतणो सामाजिआणं ।
(अहो ! कुत एषः ईहामृगविलोकनप्रयत्नः सामाजिकानाम् ।)

**सूत्रधारः**—(iii) गुणारामाः खल्वेते ।

**नटी**—विरळो खु तारिसरूवअंपओअ । (विरळः खलु तादृशरूपकप्रयोगः)

**सूत्रधारः** – (स्मृतिमभिनीय, सप्रणयकोपम् ) नन्वध्यापिताऽसि
(iv) तमुर्वशीसार्वभौमं नाम नवीनमीहामृगम् । )

**नटी**—णादं । णादं । (ज्ञातम् । ज्ञातम् ।)

---

टिप्पणी—(i) प्रतापखनिः –खनिः आकरः । प्रतापस्य खनिः (ii) दुष्कीर्तिवितानं विधूय-इत्यन्वयः । दुष्कीर्तिरेव वितानम् । तद्विधूय कम्पयित्वा इत्यर्थः । 'आतपाद्यपनयार्थमुपरिबद्धस्य वाससः' वितानम् इति नाम । "अस्त्री वितानमुल्लोचः" इत्यमरः (मनुष्यवर्गः)

(iii) गुणा एव आरामाः एषां ते गुणारामाः । गुणपक्षपातिनः सहृदयाः इत्यर्थः ।

(iv) अस्य रूपकस्य नाम अत्र निर्दिष्टमस्ति ।

---

[1] सूत्रधारः—इति पदं 'क' प्रतौ लुप्तमस्ति ।

[2] 'पुनः' इति पदं 'ग' प्रतौ नास्ति ।

जंस [1]कइ *कणाडरामाअणादि[2]महापवंद-
णिंमाणणिवुणो वेंकअंजोंति गिंजदि ॥ ४ ॥

(यस्य कविः कर्णाटरामायणादिमहाप्रबन्धनिर्माणनिपुणः वेङ्कयार्य इति गीयते ।)

---

टिप्पणी—* वेङ्कामात्यस्य—वेङ्कयार्यः, वेङ्कप्पय्यः, इत्यादीनि नामानि सन्ति। अनेन न केवलं संस्कृते. कर्णाटभाषायामपि कृतीः रचिताः इत्यनेन ज्ञायते। 'सीताविवाहः' 'हनुमज्जयम्' 'कर्णाटरामायणम्' इति कृतयः कर्णाटकभाषायां निवद्धाः अनेन। तदुक्तमस्यैव 'कामविलासभाण-प्रस्तावनायाम्'—

यः श्रीरामपदारविन्दविहरद्भृङ्गायमाणामल-
स्वान्तश्रीपवनात्मजप्रसदनस्वाधीननानाकलः।
येनाकारि कवीन्द्रनन्दितरसं सीताविवाहाभिधं
काव्यं श्रीहनुमज्जयेन च समं कर्णाटरामायणम् ॥ इति।

अस्य कुलगोत्रादिकमपि तत्रैव कामविलासभाणे एवं निरूपितमस्ति—

'विश्वानन्दिनि मौनभार्गवकुले दुग्धाम्बुधिप्रोज्वले
हम्पार्याभिधमन्त्रिणः समुदितो वाबाम्बिकागर्भजः।
आजन्मप्रथमानविलसत्सौशील्यसाम्राज्यभूः
वेङ्कप्पप्रभुरुन्नतो गुणगणैस्सोऽयं न केन श्रुतः ॥ इति।

अयं वेङ्कामात्यः मौनभार्गवगोत्रोत्पन्नः द्विजः। हम्पय्यनामकमन्त्री अस्य पिता। माता वाबाम्बिका। अयं श्रीरामचन्द्रस्य हनुमतश्च परमभक्तः आसीदित्यपि च ज्ञायते। रामपुरः अस्य जन्मस्थलम्। एतत्सर्वमनेन विरचिते 'जगन्नाथविजयनाममहाकाव्ये' प्रतिसर्गं समाप्तिवाक्ये निरूपितमस्ति। तदित्थम्—

---

[1] कई–ग  [2] महापवंदनिंमाणनिवुणो–क

सूत्रधार:—साधु स्मृतं भवत्या ।

[1]कथं गीर्वाणकर्णाटकान्ध्राद्यनेकभाषाकवयितुः प्रबन्धगणनावकाशस्तस्य ?

" *योऽसौ कामविलासभाणतिलको यद्वा चिदद्वैतकं
शास्त्रं यश्च डिमो महेन्द्रविजयो यो रुक्मिणीमाधवः ।
अङ्कः किञ्च यदाञ्जनेयशतकं काव्यं हनूमज्जयं
यत्कुक्षिम्भरभैक्षवं प्रहसनं [2]तत्सर्वमेतत्कृतम् ॥ ५ ॥

---

टिप्पणी— " इति श्रीमद्रामपुराधीशश्रीरघुनाथचरणद्वन्द्वाराधनलब्धसम्पत्सारस्वतवैभवविश्वजनीनविद्यश्रीवेङ्कयार्यप्रधानशिरोमणिविरचिते श्रीमति महाकाव्ये जगन्नाथविजये प्रथमः सर्गः ' इति ।

* 'योऽसौ कामविलासभाणतिलक'— इत्यनेन अनेन रचिताः ग्रन्थाः सूचिताः । अयं तु संस्कृतकर्णाटान्ध्रभाषासु प्रसिद्धः कविरासीदित्यपि च ज्ञायते। रूपकप्रभेदेषु संस्कृतभाषायां नाटकप्रकरणभेदद्वयं विहाय शेषेषु भाणाद्यष्टप्रभेदेषु ग्रन्थाः विरचिताः अनेन । ते च—'कामविलासभाणः', 'कुक्षिम्भरभैक्षवप्रहसनम्' 'महेन्द्रविजयडिमः', 'वीरराघवव्यायोगः' 'लक्ष्मीस्वयंवरसमवकारः', सीताकल्याणवीथी' 'रुक्मिणीमाधवाङ्कः' 'उर्वशीसार्वभौमेहामृगः'—इति । एवमेव संस्कृतभाषायां रचिताः इतरे ग्रन्थाः—'जगन्नाथविजयं नाम महाकाव्यं, 'कुशलवचम्पूः' इति चम्पूकाव्यं 'आञ्जनेयशतकम्' इति स्तोत्रकाव्यं, 'चिदद्वैतिका' इत्यद्वैतपरो ग्रन्थः, 'अलङ्कारमणिदर्पणम्' इत्यलङ्कारशास्त्रग्रन्थश्च । 'वीरराघवव्यायोगप्रस्तावनायामपि वेङ्कामात्येन रचितानां ग्रन्थानां केषाञ्चित् नामानि सन्त्येवम्—

---

[1] कथमान्ध्रगीर्वाणकर्णाटकाद्यनेकभाषाकवयितुः—क

[2] यत्सर्वमेतत्कृतम्—क

तद्गीयतां भवत्या अमुमेव *वसन्तमधिकृत्य सङ्गीतकम्॥ [1]यतः—

‡'स्वरसा सभा कविश्चित्सरसः श्लाघ्या वयं च नटमुख्याः ।
कृतिरपि मधुरा मधुरो मधुमासः सर्वमनवद्यम् ॥ ६ ॥

नटी—तह (तथा)—(इति गायति ।)

तलुणेण [2]माहवविडेण पमदेंव [3]विलुदहिजुंता ।
आलिङ्गिआ ण किमु किं वा [4]ण विळासपदं भजेईहा ॥ ७ ॥

(छाया—तरुणेन माधवविटेन प्रमदेव †वीरुदभियुक्ता ।
आलिङ्गिता न किमु किं वा न विलासपदं भजतीह ॥)

---

टिप्पणी—'योऽसौ कामविलासतत्कृतिकृती कर्णाटरामायण.
प्रौढग्रन्थविधायकः समकरोत्काव्यं हनूमज्जयम् ।
चम्पूं कौशलवीं महेन्द्रविजयं श्रीमच्चिदद्वैतिकां
तत्कुक्षिम्भरिसंयमि प्रहसनं श्रीमान् स वेङ्कप्रभुः ॥' इति

*वसन्तमधिकृत्येति चेत् वसन्तर्तुमधिकृत्येति यावत् । सङ्गीतकं-तौर्यत्रिकमित्यर्थः । तथा चोक्तं सङ्गीतरत्नाकरे —

'नृत्तं गीतं तथा वाद्यं त्रयं सङ्गीतमुच्यते' इति । सङ्गीतमेव सङ्गीतकम् ॥ 'अमरकोशे-नाट्यवर्गे—'तौर्यत्रिकं नृत्तगीतवाद्यं नाट्यमिदं त्रयम् ॥' इत्युक्तम् ॥

‡स्वरसा सभा—इत्यनेन प्ररोचनानामकः नाट्यांशः सूचितः । 'उन्मुखीकरणं तत्र प्रशंसातः प्ररोचना' (दश रू॰ ३-६) इत्यनुसारात् प्रस्तुतार्थप्रशंसनेन श्रोतॄणां प्रवृत्त्युन्मुखीकरणं प्ररोचना ।

†वीरुदभियुक्ता—'लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि-इत्यमरः (वनौषधिवर्गः) । या प्रतानिनीलताशाखादिभिर्विस्तृता लता, सैव वीरुत् ।

---

[1] 'यतः, स्वरसा-इत्यारभ्य सर्वमनवद्यम्' इति पर्यन्तो भागः-ग प्रतौ नास्ति ।
[2] माहवविणेड—क [3] विलुदभिंजुता—ग [4] 'ण' इति पदं 'ग' प्रतौ नास्ति ।

**सूत्रधार:**—(सरसावेशम्)

[i] अनुरागमनोहरा ध्रुवा रसिकानां द्विगुणैकभूषणा ।
तव गीतिरियं रसाश्रया श्रुतमात्रा[1]द्वितनोति कौतुकम् ॥ ७ ॥

(नेपथ्ये)

**साधु!** रे कुशीलव साधु । यदस्माकं राजा पुरूरवा अपि कामपि [2]तादृशीमुर्वशीनाम्नीम् उपश्रुत्य कुतुकितमनाः मनागपि [3]बाह्य व्यापारमननुसन्धानो वर्तते ।

**सूत्रधार:**—(विलोक्य) [ii][4]आर्ये ! कथम् एष [5]गृहीतकञ्चुकिवेषः कुवलय-शेखरो नाम [6]मदभिमुखमेवाभिवर्तते । तदावामपि अनन्तरकरणीयाय [7]सज्जीभवावः ।

(इति निष्क्रान्तौ)

* प्रस्तावना

---

टिप्पणी—[i] अनुरागमनोहरेति पद्यं मात्राछन्दसि—गीतिवृत्तं भवति । आर्यापूर्वार्धलक्षणमुभयोर्दळयोर्भवतीति लक्षणसमन्वयो द्रष्टव्यः ।

[ii] 'आर्ये कथम्' इत्यादिना 'प्रयोगातिशयो' नामकः प्रस्तावनाङ्गः निर्दिष्टः । तल्लक्षणमुक्तं दशरूपके—

एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः ।
पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः ॥ (३-११) इति ।

* प्रस्तावना इति । सर्वस्यापि काव्यार्थस्य सूचिक. भारतीवृत्तिः । तस्याः अङ्गानि आमुखं, प्ररोचना, वीथिः प्रहसनमिति

---

1 वितनोतु-क
2 एतादृशीम्-क
3 वाह्यव्यापारमननुसान्धाने तां वर्तते-क
4 'आर्ये' इति पदं 'क' प्रतौ नास्ति।
5 गृहीतकञ्चुकवेषः-क
6 अभिमुखमेव-क
7 सज्जीभवामः-क

टिप्पणी—

चत्वारि । प्रस्तावनायाः आमुखमिति नामान्तरमस्ति । आमुखविशेषः प्रस्तावना, प्रस्तावनाविशेषः आमुखमित्यभिप्रायभेदोऽप्यस्ति । पुरुषविशेष-प्रयोज्यः संस्कृतबहुलः नटाश्रयो वाग्व्यापारः भारतीवृत्तिरिति । उक्तं च दशरूपके—

'भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः ।
भेदैः प्ररोचनायुक्तैर्वीथीप्रहसनामुखैः ॥ (३-५) इति ।

तत्र आमुखस्य अर्थात् प्रस्तावनायाः लक्षणमिदम्—

'सूत्रधारो नटीं ब्रूते मार्षं वाऽथ विदूषकम् ।
स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ॥
प्रस्तावना वा, तत्र स्युः कथोद्घातः प्रवृत्तकम् ।
प्रयोगातिशयश्चाथ वीथ्यङ्गानि त्रयोदश ॥

(दशरूपकम्—३-७,८,९)

द्वयोस्सूत्रधारयोर्मध्ये पूर्वरङ्गविधायकः सूत्रधारः प्रत्यूहपरिपन्थिनं पूर्वरङ्गनामकं कर्मविशेषं कृत्वा निर्गच्छति । ततः नटस्थापकाद्यपरपर्यायः पूर्वसूत्रधारसदृशगुणाकृतिः द्वितीयः सूत्रधारः प्रस्तावनां करोति । अत्र तु नटीमारिषादिसंभाषणादयमेव विवक्षितः । अस्य गृहिणी नटी । मारिषः पारिपार्श्विकः । नर्मसचिवः विदूषकः । भावप्रकाशे एतल्लक्षणान्येवं सन्ति—

(i) **सूत्रधारः**—आसूत्रयन् गुणान् नेतुः कवेरपि च वस्तुनः ।
रङ्गप्रसाधनप्रौढः सूत्रधार इहोदितः ।

(ii) **नटी**— चतुरातोद्यभेदज्ञा तत्कलासु विशारदा ।
करणाभिनयज्ञा च सर्वभाषाविचक्षणा ।
नटानुयोक्त्री कृत्येषु नटस्य गृहिणी नटी ॥

(ततः प्रविशति कञ्चुकी)

[1]कञ्चुकी— (सशिरःकम्पम्)

(सरसमित्यादि पठित्वा)

अहो! विषयाणामाकर्षणपाटवं मनसः। अस्माकं राजाप्यूर्वशीं नाम काञ्चिदुपश्रुत्य दिव्यामत्यन्तभव्यरूपलावण्यगुण्याम् अगण्य-सुगुणधन्याम् अन्यादृशमदनबाधादोधूयमानमानसो वर्तते। किन्तु गम्भीरतया हृदयस्य रहस्यवेदिनामप्यगम्य[2]मनोरथाप्रसक्तिरिव-राज्याधिकारेऽपि [3]तदनुगुणव्यवहारवान्नास्ति।

(इति परिक्रम्य पुरोऽवलोक्य)

कथमयं राजमन्त्रिणः नयनिधेः तनयः कलानिधिर्नाम ममाभ्याशे समायाति।

---

(iii) पारिपार्श्विकः—भरतेनाभिनीतं यो भावं नानारसाश्रयम्।
परिष्करोति पार्श्वस्थः स भवेत् पारिपार्श्विकः॥

(iv) विदूषकः—तदात्वप्रतिभो नर्मचतुर्भेदप्रयोगवित्।
वेदविन्नर्मवादी यो नेतुः स स्याद्विदूषकः॥ इति॥

अभिमतरूपकप्रयोगेण परिषदाराधनात्मकं स्वकार्यं, वस्त्वादिचतुष्टयं प्रस्तुतं काव्यार्थरूपं च नाट्यादिकं उभयप्रतिपादिकया चित्रोक्त्या सूत्रधारः यद् वदति तदेव आमुखमिति। अस्यैव प्रस्तावनेति नाम। यद्यपि आमुखमिति नाम्नि सत्यपि सामान्यतः संस्कृतनाटककाराः 'प्रस्तावना' इत्येव निर्दिशन्ति। एवमेव प्रस्तावनाविधायकस्य नटस्य स्थापकः, नटः इत्यादिषु नामादिषु सत्स्वपि, अस्यापि 'सूत्रधारः' इत्येव नाम निर्दिशन्ति नाटककाराः। 'नान्द्यन्ते ततः प्रविशति सूत्रधारः' इति भासादयः निर्दिशन्ति। अतः उभयोस्सूत्रधारयोर्विषये विशेषतः पर्यालोचनं विदग्धैः कर्तव्यम्।

---

[1] कञ्चुकीति पदं 'क' प्रतौ नास्ति।

[2] मनोरथाप्रसक्तेव–क [3] तदनुगुणं व्यवहरणं नास्ति–क

(ततः प्रविशति कलानिधिः)

कलानिधिः—आदिष्टोऽस्मि मदीयजनकेन । वत्स ! कलानिधे । गच्छ । राजकुलमजानन्निव तत्र तत्र प्रचलन् उपलभ्य सम्यगतिशय-वृत्तान्तान् आगच्छेति ।

(इति कतिचित्पदानि गत्वा, निर्वर्ण्य)

कथम् ! आर्यः शेखरकः । तदस्मादेवान्तःपुरचारिणः सम्यगवगन्तव्यं राजरहस्यम् ।

(इत्युपसृत्य)

आर्य कथमनुज्झितान्तःपुरस्थितेः तत्राऽपि बहिस्सञ्चारावकाश इति विस्मितोऽस्मि ।

[1] शेखरकः—निपुणमालोचितं भवता । तथाऽपि तनयन्यस्ताधिकारतया [2] विरळप्रचारवानस्मि राजपरिचर्यायाम् । यतः 'स्थविरदशादुर्लभं नाम महीवल्लभोपासनम्'

(i) यदादिष्टं सद्यः कृतमिव तदङ्गीकृतवता
यदालोच्यं तन्न श्रुतमिति च बाधिर्यमयता ।
यदग्रे वस्तु स्यादपि कलयता दूरगमिव
प्रणीतं तारुण्यं किमिति न वयो व्याकुलयति ॥ ९ ॥

---

टिप्पणी— i) यदादिष्टमिति । कञ्चुकिनः कार्यं कष्टमित्यभिप्रायः अत्र वर्तते । 'स्वामिना कार्यमादिष्टश्चेत् सपदि अङ्गीकृतमिति, आलोच्यं चेत् न श्रुतमिति च वक्तव्यम् । पुरतः वस्तु स्यादपि, दूरस्थितमिव मन्तव्यम् । स्वाभिप्रायस्य अवकाश एव नास्ति । सेवयैव तारुण्यं गतमिति

---

[1] 'ग' प्रतौ 'शेखरकः' इति पदस्य स्थाने सर्वत्र 'कञ्चुकी'ति पदं दृश्यते ।

[2] विरळप्रचारमानोऽस्मि–क.

कलानिधिः—आर्य ! सत्यमेवैतत् । इदानीं कुत आगतोऽसि ।

शेखरकः—राजकुलात् ।

कलानिधिः—[1]अस्ति किं वृत्तान्तः ?

शेखरकः—एतावदेव जानामि ।

ii 'नितरामञ्चति कृशतां निर्झर इव शैलसम्भवस्तपसि ।
अयमिह राजा चित्रं प्रसदनरीतिं तथाऽपि न त्यजति ॥१०॥'

कलानिधिः—न जानासि कारणमेतस्य ।

शेखरकः—iii (स्वगतम्) न खलु उद्घाटनीयं राजरहस्यम् । तथाऽपि आप्तमन्त्रिषु न्यस्तम् अनिष्टनिवृत्त्यै भविष्यति ।

---

टिप्पणी—चेत् शोचनीया खलु सा दशा' ॥ पद्यमिदं अत्यष्टिच्छन्दसि शिखरिणीवृत्ते वर्तते । 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी'ति तल्लक्षणम् । (वृत्तरत्नाकरः ३-अ)

(ii) नितरामिति—यथा शैलादुत्पन्नः निर्झरः ग्रीष्मकाले नितरां कृशतामञ्चति, अथाऽपि मनोहारितां न त्यजति, तथैव अयं नृपोऽपि तपसि अतिक्षीणस्सन्नपि, प्रसन्नतास्थितिं न त्यजतीति भावः । अत्र तपसि इत्यस्य निर्झरपक्षे ग्रीष्मे इत्यर्थः । राजपक्षे तपोकर्मणि इत्यर्थः । प्रसदनरीतिमित्यस्य-प्रसन्नतादशामित्यर्थः । प्र-उपसर्गपूर्वकषद्लृधातोः भावे ल्युट्प्रत्ययः । प्रसदनस्य रीतिं-प्रसदनरीतिमिति । कृशतायामपि निर्झरराजानौ रमणीयावित्यर्थः । गीतिवृत्तमिदं पद्यम् ॥

(iii) कथावस्तु सूच्यं, दृश्यश्रव्यमिति द्विविधम् । तत्र रसविहीनमनुचितं वस्तु सूच्यम् । मधुरोदात्तरसभावनिरन्तरं वस्तु दृश्यम् । सूच्यं वस्तु अर्थोपक्षेपकैः पञ्चप्रकारैः सूच्यते । पुनश्च वस्तु सर्वश्राव्यं, नियतश्राव्यम्,

---

[1] अस्ति किञ्चिद्वृत्तान्तम्-क

i) (प्रकाशम्) (कर्णे) एवमिव ।

**कलानिधिः**—केनेदमुपनीतं [1] श्रवणपथमसुलभं कन्यारत्नम् ।

**शेखरकः**—ननु भगवता नारदेन सङ्कथासु ।

**कलानिधिः**—[2] कथमिव विषयनिरस्तस्याऽपि योषित्प्रस्तावः ।

**शेखरकः**—नन्वेष नारायणमुनेरन्तेवासी ।

**कलानिधिः**—(विहस्य) सुतरामसङ्गतमेतत् । स खलु कामकलानभिज्ञः ।

**शेखरकः**—श्रोतव्यमुपर्यपि । उक्तं च गुरुमहिमप्रसङ्गेन ।

ii) **घोरे तपस्यन्वहमास्थितस्य नारायणस्याऽपि तपोऽन्तरायम् ।**

---

टिप्पणी—अश्राव्यञ्चेति त्रिविधम् । i) सर्वश्राव्यं वस्तु 'प्रकाश'मिति, अश्राव्यं वस्तु 'स्वगतम्' इति । नियतश्राव्यं तु जनान्तिकमपवारितभेदेन द्विविधमिति । उक्तं च दशरूपके—

द्वेधा विभागः कर्तव्यः सर्वस्यापीह वस्तुनः ।
सूच्यमेव भवेत् किञ्चित् दृश्यश्रव्यमथापरम् ॥
नीरसोऽनुचितस्तत्र संसूच्यो वस्तुविस्तरः ।
दृश्यस्तु मधुरोदात्तरसभावनिरन्तरः ॥
अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् । (दश॰ रू॰—१-५६, ५७, ५८)
नाट्यधर्ममपेक्ष्यैतत् पुनर्वस्तु त्रिधेष्यते ।
सर्वेषां नियतस्यैव श्राव्यमश्राव्यमेव च ॥
सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम् ।
द्विधान्यन्नाट्यधर्माख्यं जनान्तमपवारितम् ॥ इति
(दशरूपकम्—१-६३, ६४, ६५)

(ii) **घोरे तपस्यन्** इति । प्रत्यहं तपोमग्नस्य नारायणस्य तपोभङ्गार्थं सुराणां प्रथमः इन्द्रः अप्सरस्स्त्रीभिः सह मन्मथं प्रेषयामासेत्यर्थः ।

---

[1] श्रवणपथं कन्यारत्नम्-ग [2] कथं विषयनिरस्तमपि योषित्प्रस्तावः-क

कामं चिकीर्षुः सहसाप्सरोभिः
कामं न्ययुङ्क्त प्रथमस्सुराणाम् ॥ ११ ॥

कलानिधिः – असूयाविष्टाः त्रिविष्टपवासिनः इति प्रसिद्धमेव । [1]ततस्ततः ।

शेखरकः–(i) मधुमलयानिलशशभृन्मधु[2][क]रकलकण्ठमुखसहायेन ।
मदनेन पात्यमानो मुनिरुन्मीलद्दृगास सहसा [3]सः ॥ १२ ॥

कलानिधिः—किं तस्याऽपि तथाविधं मनः ।

शेखरकः —शान्तं पापम् । शान्तं पापम् । ततस्तेन कामुककथान्तरेण

---

टिप्पणी—त्रिष्टुप्छन्दसि इन्द्रवज्रावृत्तम् ॥ 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति लक्षणम् ।

(i) मधुमलयानिल इति— मन्मथः मधुमलयवातचन्द्रभ्रमरः कोकिलादिसहायेन नारायणमुनेः तपः बभञ्ज । तदा सद्य एव मुनिः विकसितनेत्रः बभूव । मदनेन तपोभङ्गः कृतः इत्यर्थः ।

मधुः—चैत्रमासः, वसन्तऋतुश्च । मलयानिलः— मलयपर्वत-शीतवायुः । शशभृत्–चन्द्रः । मधुकरः–भ्रमरः । कलकण्ठः–कोकिलः । एते सर्वे कामोद्दीपकाः इति अलङ्कारशास्त्रे प्रसिद्धम् । पद्यमिदं मात्राछन्दसि-गीतिः भवति । आर्यायाः पूर्वार्धलक्षणं–पूर्वार्धोत्तरार्धयोः उभयोरपि भवति चेत् तदा गीतिरिति ।

उक्तं च लक्षणं वृत्तरत्नाकरे —

आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः ॥

इति । (२ अध्यायः)

---

[1] ततः–क [2] 'क' इत्यक्षरः योजितः [3] सहसन्–ग

निजोरुदेशात् (i) अधरीकृतरम्भादिसुरवधूनिकुरुम्बा नितम्बिनी सृष्टा । साधारणी भवत्वेषा दिविषदामित्याज्ञप्य प्रस्थापिता च ।

**कलानिधिः**—ततस्ततः ।

**शेखरकः**— निवृत्तदर्पाश्च (ii) दर्पकादयः पाकशासनाय तामादाय निवेदयाञ्चक्रुः ।

**कलानिधिः**—सम्यक् खलु व्यवसितं मुनिना । ततस्ततः ।

**शेखरकः**—सैवोर्वशीति विख्याता सारभूता[1]कृतिर्विधेः ।
(iii) नासीराभरणं तस्यैवासीन्मदनभूपतेः ॥ १३ ॥

**कलानिधिः**—त्वया सप्रकारमेतत्कथं विदितम् ।

**शेखरकः**—तस्यैव राज्ञः पुरतः भगवतो नारदस्य मुखात् ।

**कलानिधिः**—(सम्यग्विचिन्त्य) आर्य ! कलहप्रियः खल्वयम् । एवं खल्वभिप्रायोऽस्य ।

'तस्यै स्पृहयते राजा स महेन्द्रोऽपि तादृशः ।
अनेनैव पथा दर्पमैन्द्रं प्रशममेष्यति ॥१४॥' इति

---

टिप्पणी—(i) अधरीकृत इति । अधरीकृतः तिरस्कृतः रम्भादिसुरवधूनां निकुरुम्बः समूहः यया सेत्यर्थः ।

(ii) दर्पकः—मन्मथः । दर्पकः आदिरेषां ते दर्पकादयः ।

(iii) नासीराभरणम्—नासीरं सेनामुखम् । सेनायाः अग्रभागः । तस्य आभरणं अग्रेसरीति यावत् ।

अतिशयितरूपसम्पन्ना सा उर्वशी मन्मथनृपस्य सेनाग्रभागस्य प्रथमा अभूदित्यर्थः ।

(नासाशब्देन ईर्ते गच्छति इति नासीरम् । नास्+ईर (गतौ) 'क' (पा. ३-२-४)

---

[1] कृतेर्विधेः-क

**शेखरकः**—ननु ! मन्त्रिकुमारः खल्वसि । तत्तथा [i]) शुभोदर्को भवति राज्ञः प्रयत्नः तथा यतितव्यमिति तव पित्रे निवेदय । अहमपि विश्रान्तिगृहमेवोपगच्छामि ।

॥ इति निष्क्रान्तौ ॥

ii) (विष्कम्भः)

(ततः प्रविशति राजा विदूषकश्च)

**राजा**—अहो निर्वेदः ! [1]सर्वतोऽप्यकारणमेवास्माकम् । तथा हि—

---

टिप्पणी—(i) **शुभोदर्कः**—उदर्कः भाविफलम् । शुभश्चासौ उदर्कश्च शुभोदर्कः—भावि सत्फलमित्यर्थः ॥ 'उदर्कः फलमुत्तरम्" इत्यमरः (क्षत्रियवर्गः) ।

(ii) **विष्कम्भः** — नीरसकथावस्तुनः प्रतिपादनक्रमेषु विष्कम्भएकः । तदुक्तं दशरूपके—

'अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ।
विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः ॥
वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥ (१-५८, ५९)

अतीतानां भाविनां च कथावयवानां ज्ञापको मध्यमेन मध्यमाभ्यां वा पात्राभ्यां प्रयोजितो विष्कम्भः इति । सः शुद्धसङ्कीर्णभेदेन द्विविधः । एकेन द्वाभ्यां वा मध्यमपात्राभ्यां शुद्धो भवति । मध्यमाधमपात्रैर्युगपत्प्रयोजितः सङ्कीर्णः । अत्र कलानिधिशेखरकाभ्यां मध्यमपात्राभ्यां नारायणमुनितपोविचारः, मन्मथेन तपोभङ्गः, ततः उर्वश्युत्पत्तिश्च भूतार्थः सूचितः । एवमेव एतस्याः उर्वश्याः कृते महेन्द्रपुरूरवसोः स्पृहा, ततः अन्योन्यं कलहोऽपि भविष्यतीति भाव्यर्थोऽपि सूचित इति शुद्धविष्कम्भकः ।

---

[1] सर्वतोऽप्यकारण एव–ग

* प्रत्यक्षस्थितमप्यदृष्टचरवत् प्रायो न संमन्यते
श्रुत्वा चाऽपि वचः प्रमोदनकृतं बाधिर्यमालम्बते ।
चेतश्चिन्तनमप्यपूर्वविदिते वस्तुन्यवाप्य प्रिये
चेतः किं नु परं करिष्यति पदं नूनं न जानीमहे ॥ १५ ॥

विदूषकः—(सहासम्) [1] वअंस! भअवदो [2] नाळदंसोवदेशादो आरहिआ एवं अवंथोसि ।

(वयस्य! भगवतो नारदस्योपदेशादारभ्य एवम् अवज्ञोऽसि)

राजा—(स्वगतम्) कथमनेन रहस्यं विज्ञातमित्र। (प्रकाशम्) कथमयोगवतामपि एवमस्माकं निर्वेदः ॥

विदूषकः—[3] संचं एदं । जं अवोअवंतो तुमं । अदो एंव एवं किळंतोसि।

(सत्यमेतत्। यदयोगवान् त्वम्। अत एव एवं क्लान्तोऽसि।)

राजा—(स्वगतम्) सम्यक् खलु विदितमनेन (i) वैधेयेन। (प्रकाशम्) किमस्माकमपि बहुवल्लभानामयोग इति।

---

टिप्पणी—*प्रत्यक्षस्थितमपीति। प्रत्यक्षतया दृष्टेऽपि वस्तुनि अदर्शनमिति, हर्षजनितवचःश्रवणेऽपि अश्रवणमिति, अपूर्वतया ज्ञाते प्रियेऽपि वस्तुनि चिन्तनमिति चेत् किं वक्तव्यं पुरतः। उत्तरोत्तरं मनः किं किं करिष्यतीति न जाने इति तस्य राज्ञः वचनम्। निर्वेदः अत्र वर्णितः। अतिधृतिछन्दसि शार्दूलविक्रीडितवृत्तम्। 'सूर्याश्वैर्मसजास्तताः सगुरवः शार्दूलविक्रीडितम्' इति तल्लक्षणम् (वृत्त. र. ३ अ)

(i) वैधेयेन--मूर्खेणेत्यर्थः।

---

[1] वाअंसा–क

[2] नाळदंत उवदेशादो–ग

[3] संत्तं एदं–क

विदूषकः—तं एंव [1]उंवसिं पुंछ। (तामेवोर्वशीं पृच्छ)

राजा— (सलज्जादरं माल्येन ताडयति)

विदूषकः—तुमं अदिमेंतं [2]ताडिदोसि मअणेण। हं दु एंकवाळं तुएंति महंतो विसेसो।

(त्वमतिमात्रं ताडितोऽसि मदनेन। अहं तु एकवारं त्वयेति महान् विशेषः।)

राजा—(सचिन्ताश्वासम्) सत्यं परवानस्मि मदनेन। किं करिष्यात्मनो विनोदनाय।

विदूषकः—कि णु अंथ चिंतिदंवं। सा खु साहारिणीति सुणीअदि। कंचणं रअणं अंणवा [3]अवेंखिदं दिंणं जदि तुह घरदासी हविंसदि। [[4]किं न्वत्र] चिन्तितव्यम्। सा खलु साधारिणीति श्रूयते। काञ्चनं रत्नं अन्यद्वा अपेक्षितं दत्तं यदि तव गृहदासी भविष्यति।

राजा—न खल्वेवम्। पुण्यैकसाध्याः खल्वप्सरसः। [5]विशेषितस्यैषा सुरयोषिच्छिरोमणिः।

विदषकः—तह जदि पुंणसुळओ एंव तुमं।

(तथा यदि पुण्यश्लोक एव त्वम्।)

राजा—*i*) यज्वानः किमु सन्ति न त्रिदिवगा किं कृच्छ्रचान्द्रायणाः
प्राणायामपरा न राजपतपः[6]स्वाध्यायवन्तोऽपि किम्?

---

टिप्पणी—(i) विधिना यागं कृतवन्तो जनाः यज्वानः, कृच्छ्रचान्द्रायणादिव्रतनिरताः जनाः, योगिनः, तपःस्वाध्यायनिरताश्च जनाः दूरे

---

[1] उंवर्शि पुंत्स–क [2] ताडितोसि–क [3] अविखिदं दिणं–क

[4] क–ग–प्रत्योः 'किमत्र' इत्यस्ति। प्राकृतपाठे 'किंणु अंथ' इत्यस्ति पाठः। तदनुसारात् 'किं न्वत्र' इति छाया भवेत्। अतः 'स' एव संशोधितपाठः स्वीकृतः अत्र। [5] विशेषतस्तेषां सुर–ग [6] स्वाध्यायमन्तोऽपि कमू–क

ते तिष्ठन्तु विदूरतः प्रतिकूलप्रेमातिशायिस्पृहं
नो लक्षीकुरुते महेन्द्रमपि [1] वेत्येवं हि सा श्रूयते ॥ १६ ॥

विदूषकः—(विहस्य) तह जदि मह तपोविसेसेण आकक्किसिआ पंसे एंव तुह कळिं सं।

(तथा यदि मम तपोविशेषेण आकृष्य तव पार्श्व एव करिष्यामि।)

राजा—अपूर्वमहिमा खलु भवान्। यन्मदनयज्ञपरायणोऽसि।

विदूषकः—सुमरिदं मए। [2] मअणगामंचाळेण जदि सा एंकवाळं वअंसं पेंखदि [3] तहि एंव मअणबाहाविंठहिअआ अंणाधाळिणी हविंसदि।

(स्मृतं मया। मदननामोच्चारणेन यदि सा एकवारं वयस्यं पश्यति तदानीमेव मदनबाधाविष्टहृदया आज्ञाधारिणी भविष्यति।)

राजा—[4] महेन्द्रप्रतिबद्धा सा मम किं वशमेष्यति।
घनाघनसमाक्रान्ता कलेव शिशिरत्विषः ॥ १७ ॥

---

टिप्पणी—तिष्ठन्तु। तस्यां सर्वदा नितरामनुरागिणं सुरेन्द्रमपि न लक्षीकुरुते इति किंवदन्ती श्रूयते। तदेव आश्चर्यमिति भावः॥ अतिधृतिछन्दसि-शार्दूलविक्रीडितवृत्तम्। "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्" इति लक्षणम्। (वृ- र॰ ३ अ)

महेन्द्रप्रतिबद्धेति। शिशिरत्विट्—चन्द्रः। घनाघनः—वर्षुकाब्दः (वर्षुकाब्दो घनाघनः इत्यमरः, नानार्थवर्गः)। जलयुतमेघावृता चन्द्रकलेव, महेन्द्रप्रतिबद्धा—इन्द्रवशवर्तिनी सा उर्वशी मम वशमागष्यति वा। नैवेति निराशा राज्ञः॥

---

[1] वेत्येवं विसा—क
[2] मअणणामंतसाळेण—क
[3] तंहि—क
[4] महेन्द्रं प्रति बद्धा—ग

**विदूषकः**—तह जदि महेंदं एंव विदाविअतं । ओहरिसंह्म ।

(तथा यदि महेन्द्रमेव विद्राव्यताम् । अपहरिष्यामः ।)

**राजा**—नैतदप्युपयुज्यते ।

**विदूषकः**—किंणु भीदोसि [1]महेंदसाहसादो । यदि अंणा तुह [2]तणं खणे एंको एंव [3]उत्तरीजंचळेण बंधि आणइंसं ।

(किं नु भीतोऽसि महेन्द्रसाहसात् । यद्याज्ञा तव तस्मिन् क्षणे अहमेक एव उत्तरीयांचलेन बध्वा आनेष्यामि ।)

**राजा**—तावानस्ति तव प्रतापः तथाऽपि स खलु सखा महेन्द्रोऽस्माकम् । [4]तत् पराक्रमगोचरो न भवति ।

**विदूषकः**—वअंस मा भणाहि [5]एंवं । मह खु [6]मोअअखंडिआवसळे [7]केणावि समं [8]मितंतणं णंथी ।

(वयस्य मा भण एवम् । मम खलु मोदकखण्डिकावसरे केनाऽपि समं मित्रत्वं नास्ति ।)

**राजा**—सत्यमेतन् ।

i) **व्यर्थीकरोति सौहार्दं वैरमेकामिषोद्भवम् ।**
**यथा तिलोत्तमासङ्गे स्पृहा सुन्दोपसुन्दयोः ॥ १८ ॥**

तथाऽपि सुहृदतिक्रमे न पारयामो वयम् । त्वमेवाऽत्र सुखोपायं पश्य ।

---

टिप्पणी—i) **व्यर्थीकरोति इति**—एकस्यैव भोग्यवस्तुनः कृते समुद्भवं वैरं स्नेहमपि नाशयति। सुन्दोपसुन्दौ सोदरौ एकस्यामेव तिलोत्तमायामनुरक्तौ

---

1 'महेंदसआसादो'–'महेंदसाहसादो' इति द्विधा पाठः 'ग' प्रतौ दृश्यते । छायायां 'महेन्द्रसाहसात्' इति वर्तते । 'क' प्रतौ 'महेन्द्रसकाशात्' इति छायायामस्ति । मूलप्राकृतपाठस्तु 'महेन्द्रसाहसादो' इत्येवास्ति । अतः 'महेन्द्रसाहसादो' इति मूलप्राकृतपाठ एव स्वीकृत्य 'महेन्द्रसाहसात्' इति छायापाठोऽपि उपरि दत्तः । 'महेन्द्रसकाशात्' इत्यस्य 'महेंन्द्रसआसादो' इति पाठं स्वीकृत्य दत्तश्चेदपि न दोषः । 2 तणि खणे–ग 3 उंतरिजंत्सळेण–क
4 तत्पराक्रमगोचरो भविष्यति–ग 5 एंव–क 6 मोदअ–क 7 केणवि–क 8 वितंतणं–क

विदूषकः—वअंस ! [1]मअणदेवदाहाहणं एवेंति [2]तंकेमी ।

(वयस्य [3]मदनदेवताराधनमेवेति तर्कयामि ।)

राजा— (अञ्जलिं बध्वा)

ii) 'मदन ! मदनुतापं मानसं संहरैनम्
मधुरमधुररूपामद्य तामानय त्वम् ।
तव खलु मुनिना सा निर्मिता दर्पशान्ति-
र्हृदयमदयमस्यास्तप्यतां मां मदीयम् ॥ १९ ॥'

विदूषकः—वअंस [4]णिवुणं खु पंथितो मअणो । किंदु महंतो तस्स [5]अमंचो महु किदाणुगहो जदि सुळहा हविसदि तुह मणोरहवळहा ।

([6]वयस्य निपुणं खलु प्रार्थितो मदनः । किंतु महांस्तस्यामात्यः मधुः कृतानुग्रहो यदि सुलभा भविष्यति तव मनोरथवल्लभा ।)

राजा —-तथाक्रियते । (सविनयम्)

---

टिप्पणी—सन्तौ अन्योन्यकलहेन परस्परं हतौ । अतः उर्वश्याःकृते आवयोरुभयोः कलहो न हिताय भवतीति नृपस्य अभिमतम् ।

ii) राजा अत्र मदनं प्रति—उर्वशीसाक्षात्कारं प्रार्थयति । 'मदन ! मदनुतापमिति पद्यं'—अतिशक्करीछन्दसि—मालिनीवृत्तेऽस्ति—'ननमयययुतेयं मालिनी भोगिलोकैः' इति तल्लक्षणम् (वृत्त. २–३ अ) ।

---

[1] मअणदेवतापूहणं एवेंति—क  [2] तंकेमि—ग·

[3] 'मदनदेवतापूजनमेवेति'—इति 'क' प्रतौ छायायां भवेत् । 'मदनदेवताराधनमेवेति'—इत्येवाऽस्ति । तन्न युक्तम् । अतः 'मदनदेवतापूहणं एवेंति इति पाठस्वीकरणे 'मदनदेवतापूजनमेवेति' इति छायायां पाठः स्वीकरणीयः ।

[4] निवुणं खु—क·  [5] अमंत्सो महु—क

[6] 'वयस्य निपुणं खलु प्रार्थितो मदनः' इत्यन्तो भागः 'क' प्रतौ लुप्तः ।

i) 'मधो ! निधेहि साक्षान्मे मधुराधरपल्लवाम् ।
स्तनस्तवकनम्राङ्गीं लतां सञ्जीवनीमिव ॥२०॥ '

विदूषकः—णिवुणं खु एदं वि । किंदु पुढमं एव्व पंथणिजो मळआणिळ-[1]हदओ ॥

(निपुणं खल्वेतदपि । किंतु [2] प्रथममेव प्रार्थनीयो मलयानिलहतकः ।)

(जं एसो [3]विअअळहो मंमहमहाळाअस ।)

(यदेष विजयरथो ममन्थमहाराजस्य)

राजा—तदप्यस्तु । (सप्रश्रयम्)

ii) 'अव्याजबन्धुरस्माकमव्यात् गन्धाचलानिलः ।
यथा मुधा न हीयेत जगत्प्राण इति प्रथा ॥२१॥ '

---

टिप्पणी—i) मधोः प्रार्थनेयम् । मधुरपल्लवयुता, पुष्पगुच्छेन प्रह्वीभूता, सञ्जीवनीलता यथा जनान् आनन्दयति, तथैव मधुराधर एव पल्लव, यस्याः सा, स्तनावेव स्तबकौ, ताभ्यां नम्राङ्गा, सञ्जीवनी लतेव कृशेयं उर्वशी मामानन्दयति । अतः तां मत्समीपमानयेति राजा मधुं प्रार्थयति । लतासादृश्यमुर्वश्यां वर्णितम् । अत्र साक्षात् शब्दस्य प्रत्यक्षमित्यर्थः । 'साक्षात्प्रत्यक्षतुल्ययोः' इत्यमरः (नानार्थवर्गः)

टिप्पणी—ii) अव्याजबन्धुरिति । गन्धाचलवायुरत्र राज्ञा प्रार्थितः । वायुः सर्वेषामकारणबन्धुः । सर्वप्राणरक्षकत्वात् तस्य 'जगत्प्राण' इति नामधेयम् । अतः तादृक्बिरुदभाक् वायुः उर्वशीचिन्ता-पीडितं मां पातु । तदैव 'जगत्प्राण' इति नाम सार्थकम् । नो चेत् सा प्रथा मुधा स्यादिति । अव्यात्—रक्षत्वित्यर्थः । अव-रक्षणे इति

---

[1] हदो-क

[2] प्रथमं प्रार्थनीयो-ग-क

[3] 'विअअळहो'-इति प्राकृतं पदं 'क' प्रतौ लुप्तम् ।

**विदूषकः**—वअंस ! अंणोवि अंधि पंतणिंजो तं स एंव मअणदेवंस [1]सेणापतिं चंदो ।

(वयस्य अन्योऽप्यस्ति प्रार्थनीयः तस्यैव मदनदेवस्य सेनापतिश्चन्द्रः ।)

**राजा**—एवं क्रियते ।

i) 'अयि ! चन्द्र ! चन्द्रवदनामानय मानय मदीयवच एतत् ।
निजकुलनिर्वाहविधौ बुधजनक भवानभूत् किमनभिज्ञः ॥२२॥'

**विदूषकः**—सवंवि किदं एंव । किंदु [2]एंकं कळणिंजं ।

(सर्वमपि कृतमेव । किन्तु एकं करणीयम् ।)

**राजा**—किं तत् ।

**विदूषकः**—तंस एंव रदिवंळहंस पळिवाळो [3]पंथणिंजोंति ।

(तस्यैव रतिवल्लभस्य परिवारः प्रार्थनीय इति ।)

**राजा**—तदप्यङ्गीकृतम् । (सबहुमानम् ।)

ii) 'अयि ! कोकिलशारिकाशुकभ्रमरश्वेतगरुच्छिखावळाः ।
नयताप्सरसां शिरोमणिं न किमेषाऽपि [4]वयोवशंवदा ॥२३॥'

---

टिप्पणी—धातुः । आशीर्लिङ् ॥ 'समीरमारुतमरुज्जगत्प्राणसमीरणाः' इत्यमरः (स्वर्गवर्गः)

i) **अयि चन्द्र इति** । सा उर्वशी चन्द्रवदना । अत एव सा चन्द्रकुलीना । तस्यामनुरक्तं मां स चन्द्रो न जानाति चेत् 'बुधजनक' इति नाम मुधा भवेत् । तथा जनकस्य कर्तव्यता ह्यपि भज्येत । अतः सः तां मत्समीपमानयतु इति राजा चन्द्रं प्रार्थयति । बुधजनकः—बुधग्रहस्य पिता चन्द्र इति प्रसिद्धः ।

ii) **अयि कोकिल इति** । हे कोकिलादयो पक्षिणः अप्सरसां शिरोरत्नम् उर्वशीं भवद्भिः साकं मा नयत । तामत्रैव मुञ्चत ।

---

[1] सेणापती चंदो—क [2] एकं—क [3] पंथणिंजोंति—क [4] नयोवशंवदा—ग

**विदूषकः**—एंकं एंव कळणिजं [1]अवसिठं । जं महं पंथणंति । [2]जंबंह्मणाणुंगहेणें(वं)संवं [3]सुहोदंकं [4]होदंवं ।

(एकमेव करणीयमवशिष्टम् । यन्मम प्रार्थनमिति । यद्ब्राह्मणानुग्रहेणैव सर्वं सुखोदर्कं भवितव्यम् )

**राजा**—युक्तमाह भवान् । किमन्यभजनप्रयासेन । (ध्यानमभिनीय) कथमद्याऽपि नानीयते मदनादिभिः विधुवदना ।

**विदूषकः**—ण जाणामि काळणं । जदि [5]अंभणंणा [6]अंदेउरिआजणं पुंचिअ णिवुणं जाणिअ [7]आअंचामि ।

(न जानामि कारणम् । किंतु यद्यभ्यनुज्ञा अन्तःपुरिकाजनं पृष्ट्वा निपुणं ज्ञात्वा आगच्छामि ।)

**राजा**—(सातङ्कम् ) कथमेष वैधेयः प्रकटयितुम् उद्युङ्क्ते मनोगतम् । भवतु [8]संवृणोम्येतत् । (प्रकाशम् ) न खलु मम तस्यामभिलाषबन्धः । परिहासोदितमेतत् ।

---

साऽपि वयोवशंवदा किम् ? न इति भावः । 'वयसां वशंवदा—वयोवशंवदा । वयः पक्षीत्यर्थः । श्वेतगरुत्-हंसः । शिखावळः—मयूरः ।

i) 'पापापराधयोरागः खगबाल्यादिनोर्वयः" (नाना. व.)

ii) 'हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः (सिंहा. व.)

iii) 'शिखावळः शिखी केकी' (सिंहा. व.) इति सर्वत्र अमरः ॥

---

1 अवशिठं—क 2 'जंबंह्मणाणुंगहेणं संवं'—इति क–ग–प्रत्योः उभयत्र प्राकृतपाठो दृश्यते । छायायामुभयत्र 'यद्ब्राह्मणानुग्रहेणैव सर्वम्' इति पाठोऽस्ति । अतः प्राकृतपाठः 'जं बंह्मणाणुंगहेणेंव संवं इति शोधितः ।' 3 सुहोंदक—क 4 होदवं—क

5 अभंणणा—क 6 अंदेवुरि—क

7 आअचामि—क 8 संरिणोम्येतत्—क

**विदूषकः**—[1]संवं विदिदं मए। जं कहेदि [2]तुह मुहपंडिमादिअं हिअ-अंठिदं [3]धीरंतणं।

(सर्वमपि [4] विदितं मया। यत्कथयति तव मुखपाण्डिमादिकं हृदयस्थितं धीरत्वम्।)

(हसन्) (संस्कृतमाश्रित्य)

i) वदनं परिपाण्डुरं कृशं वपुरालोचनभाजनं मनः।
कथयन्ति न मन्मथक्लमं कथमेतानि सकान्तिकानि ते ।२४॥

**राजा**—(अनाकर्णितकेन) अयि प्रिये

ii) मदनानुतापहृदनारतप्रियं मधुनापि सेव्यमधुनापि [5]सादरम्।
करिकुम्भजेतृकुचकुम्भलंभनं सरयं विधेहि परिरम्भसंभ्रमम् ॥२५॥

(इत्याकाशमालिङ्गति)

---

टिप्पणी—i) वदनं परिपाण्डुरमिति। मुखे पाण्डिमा, वपुषि-कृशता, मनस्यालोचनं च, राज्ञः मन्मथबाधां कथयन्तीति भावः॥ पद्यमिदं 'अर्धसमवृत्ते-ललितावृत्तं भवति॥ तल्लक्षणं वृत्तरत्नाकरे— 'ससजा विषमे यदा गुरुः सभरा स्याल्ललिता समे लगौ" (४ अध्याय) इति। विषमपादे सगण-सगण-जगणाः गुरुश्च यदा, समपादे सगण-भगण-रगणाः लघुगुरू च तदा 'ललितावृत्तम्'॥

ii) मदनानुताप इति—पद्यम् अतिजगतीछन्दसि-मञ्जुभाषिणीवृत्तं भवति। 'सजसा जगौ भवति मञ्जुभाषिणी' इति वृत्तरत्नाकरे तल्लक्षणम्॥

---

1 'संवं विदिदं मए'—इति भागः 'क' प्रतौ नास्ति।

2 तुहमोह—क

3 धिरंतणं—क

4 'विदितमेव मया' इति संस्कृतपाठः क-ग-उभयत्र प्रतौ दृश्यते। मूल-प्राकृतपाठस्तु उभयत्र संवं विदिदं मए' इत्यस्ति। तदनुसारात् 'विदितं मया' इति संस्कृतपाठः दत्तः अस्ति।

5 'शाधरम्'—इत्यपपाठः 'क' प्रतौ दृश्यते।

**विदूषकः**—[1](स्वगतम्) [2]सं चं एसो मंमदुंमाद[3]मेउळहिअओ वंटइ। ता किंणु कळिंसं।

(सत्यमेष मन्मथोन्मादमेदुर[4]हृदयः वर्तते। तस्मात् किं करिष्यामि। (प्रकाशम्) वंअंस! कहिं सा? (वयस्य कुत्र सा)

**राजा**—इयं खलु पुरतः

i) **आलंब्यांसं सख्याः जालं [5]कलया दृशोऽपि कलयन्ती।**

ii) **[कर्षति] मानसमीनं कान्तिचरी कृतपरीवर्तम्॥ २६॥**

**विदूषकः**—वअंस! अलं एदिणा [6]चिंतंभमेण।

([7]वयस्य अलमेतेन चित्तभ्रमेण)

**राजा**—(चक्षुषी उन्मील्य) कुत्र सा।

---

टिप्पणी—i) **आलम्ब्यांसमिति।** सा उर्वशी सख्याः स्कन्धम् आलम्ब्य दृशः कलया नेत्रकान्त्या जालम् आनायं कलयन्ती रचयन्ती, परीवर्तनशीलं मदीयं मानसमीनं मानसमेव मीनः, तं मानसमीनं कर्षति-इति। यथा धीवरः सरसादिषु जालं प्रसार्य इतस्ततः कृतपरीवर्तान् मीनान् गृह्णाति, एवमेव इयमप्युर्वशी, स्वीयनेत्रकान्तिजालमर्थात् कटाक्षान् प्रसार्य चञ्चलं मनोमीनं गृह्णाति इति भावः। सर्वचित्तापहारिणी सुन्दरी सेति व्यङ्ग्योऽर्थः॥

ii) 'क' प्रतौ 'कनिषति माननमीनम्' इति पाठः, 'ग' प्रतौ 'कनिषतमानसमीनं' इति च पाठः अस्ति। उभावपि पाठौ अपपाठौ। सः 'कर्षति' इति भवेच्चेत् तदा मीनग्रहणमित्यस्यार्थस्य युक्तो भवतीति कृत्वा 'कर्षति' इति संशोधितः॥ मात्राछन्दसि-आर्यावृत्तम्।

---

1 'स्वगतम्'-इति पदं 'क' प्रतौ नास्ति 2 सत्सं एसो-क
3 मेदुळहिओ-क 4 हृदयं-ग 5 कलयद्दृशोऽपि-ग
6 चिंतभमेण-क 7 वयस्य इति पदं 'क' प्रतौ लुप्तम्।

विदूषकः—[1]अमरावदिह्मि । (अमरावत्याम्)

राजा—i) 'किमुन्मादः स्वप्नः किमु किमु हि माया मदनजा
विधातुर्वा दृष्टा [2]किमतिगहना गारुडकला ।
यदायाताप्यक्ष्णोः नयनमनुनीता दृढतरं
परिष्वक्ता रक्ता क्वचिदपि निलीना किमु सखी ॥ २७ ॥

विदूषकः—[3]महवि [4]कोवेण एकदिणं [5]घळिणीं [6]वुंझिआ [7]घरंतंभादिअं सेवेंति आळिंगंतस कहं कहंवि णिसा णिगदा ।

(ममापि कोपेन एकदिनं गृहिणीमुज्झित्य गृहस्तम्भादिकं सेवेत्यालिङ्गतः कथं कथमपि निशा निर्गता ।)

राजा—कथम् । [8]अहं वञ्चितोऽस्मि दैवहतकेन । यन्नागतैव दयिता ।

ii) 'या दुर्लभा क्रतुशताचरितुर्हरेर्वा
सा वल्लभा न खलु मामयतीति मान्ये ।

टिप्पणी—i) किमुन्माद इति । ऊर्वशीविह्वलस्य राज्ञः अवस्था अत्र वर्णिता । अत्र गारुडकला इत्यस्य इन्द्रजालविद्येति ज्ञेयम् ॥ अत्यष्टि-छन्दसि शिखरिणीवृत्तम्—इदं पद्यम् । 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' (वृत्त. र. ३ अ) इति तल्लक्षणम् ॥

टिप्पणी—ii) या दुर्लभेति । शतक्रतोरिन्द्रस्यापि दुर्लभा सा उर्वशी मत्समीपमागच्छतीति नैव भावये । अधुना सा मयाऽऽलोकिता, परिचुम्बिता आलिङ्गितेति च या मतिः सा नैव यथार्था, अपि तु अयथार्था इति ॥ अत्र हरिशब्दस्य इन्द्रः इत्यर्थः ॥ शक्करीछन्दसि, वसन्ततिलकावृत्तमिदम् ।

[1] अमरावदिम्मि—ग [2] किमिति गहना —ग
[3] 'महवि'—इत्यस्मात् प्राक् 'णं' इत्यक्षरं 'क' प्रतावस्ति । [4] कोंवेण—क
[5] घळिणिं—क [6] उंझिअ—ग [7] घरंथभादिअं—क [8] तव वञ्चितोऽस्मि—ग

आलोकितेति वदने परिचुम्बितेति
चालिङ्गितेति [1]दिशधाततितो भ्रमं वा ॥ २८ ॥

(इति पारवश्यं नाटयति ।)

विदूषकः—अदिभूमिं गदो से संदावो । किणु करिंसं । जदि [2]आअमिसदि पुणो वि मुणिवळाओ दिढं बंधिआ देणएंन [3]उंवसिएआणअणं काळेमि ।

(अतिभूमिं गतोऽस्य सन्तापः । किं नु करिष्ये ? यद्यागमिष्यति पुनरपि मुनिवराको दृढं बद्ध्वा तेनैवोर्वश्यानयनं कारयामि ।)

(इति दन्तान् कटकटापयति ।)

राजा—(कथञ्चित् प्रतिबुध्य) भगवन् कुसुमायुध !

i) यदि मामुपनेष्यसि प्रियाम् अयमानम्रशिरः कराञ्जलिः ।
(शस्त्रमभिमृश्य)
यदि संप्रति मामुपेक्षसे पुरतस्त्वं तु हन्त निरीक्षसे ॥ २९ ॥

विदूषकः—तह जदि ळोओवआळो हविंसदि ।

(तथा यदि लोकोपकारो भविष्यति)

(नेपथ्ये)

ii) विकटदनुजकोटीविद्रुते देवजाते
दिगधिपसमुदाये दूरगत्व सहाये ।

---

टिप्पणी—i) यदि मामिति पद्यमर्धसमं ललितावृत्तं भवति । 'ससजा विषमे यदा गुरुः, ससरा स्याल्ललिता समे लगौ' इति तल्लक्षणम् । (वृत्त २-३ अ)

ii) विकटदनुजेति—केव्वधिकराक्षसैः त्रस्ताः देवाः पलायिताः । दिगधिपा अपि असहायकाः दूरंगताः । इदानीं किंकर्तव्यमनाः इन्द्रः

---

[1] दिशधातरितो–क [2] आयमिसदि–क [3] उंवसीए–ग

मतिमतिशयचिन्तामन्थरां सन्दधानो
वलभिदिह सहायं वाञ्छति त्वां [1]सखायम् ॥३०॥

**राजा**—क एषः ।

**विदूषकः**—सो एव्व तावसो पुणोवि [2]आअदोत्ति तंकेमि । ता जहमणोरहं करिस्सं ।

(स एव तापसः पुनरप्यागत इति तर्कयामि तस्माद्यथामनोरथं करिष्ये ।)

(इत्युत्तरीयं बध्नाति ।)

(प्रविश्य)

**प्रतीहारी**—[3]जेदु जेदु भट्टा । महेंदसआसादो मादली रहेण सहो उवंठिदो । असुळेहिं अहिजुंतो महेंदो सहाअं महाळाअं अहिळसदित्ति कहेदि ।

(जयतु जयतु भर्ता । महेन्द्रसकाशात् मातली रथेन सहोपस्थितः । असुरैरभियुक्तो महेन्द्रः सहायं महाराजमभिलषतीति कथयति ।)

**राजा**—(धनुरादाय) अयमहमनुपदमेव,

i) ' विष्टभ्य [4]दानवबलं विनिपात्य भूमौ
विद्राव्य च [5]प्रतिदिशं [विचितावसृष्टान्]

---

टिप्पणी—चिन्तितस्सन् प्रियवयस्यं त्वां सहायं वाञ्छतीति भावः ॥ अतिशक्करीछन्दसि मालिनीवृत्तम् ॥ ' ननमयययुतेयं मालिनी भोगिलोकैः ' इति तल्लक्षणम् (वृत्त. ₹-३ अ)

i) विष्टभ्येति—दानवबलं राक्षससैन्यं विष्टभ्य आक्रम्य, भूमौ विनिपात्य, प्रतिदिशं शत्रून् विद्राव्य, देवानां शत्रुभयं विसार्य, अपगतस्मृतिं

---

[1] ' सखायम् ' ' सहायम् ' इति पाठद्वयं दृश्यते 'ग' प्रतौ । परं तु चतुर्थपादे ' वलभिदिह सहायम् इति निर्दिष्टमेव । अतः ' सखायम् ' इत्येव पाठः शुद्धः इति स्वीकृतः ॥

[2] आअदोत्ति—क [3] जेतु जेतु भंटा—क [4] दानवफलं—क [5] प्रदिशं—क

विस्मार्य संप्रति विपक्षभयं सुराणां
विस्तारयामि कुशलं विबुधाधिनेतुः ॥ ३१ ॥

[1]त्वमप्यायुधागारं प्रविश्य शस्त्राण्यानय ।

[2]प्रतीहारी—(तथेति निष्क्रम्य)महाळाअ जह आणंतं तह किदं एंव ।
(महाराज यथाज्ञप्तं तथा कृतमेव ।)

विदूषकः—वअंस ! मए तुह सहाएण [3]होदंवं ।
(वयस्य मयापि तत्र सहायेन भवितव्यम् )

राजा—नेयं मोदकखण्डिका ।

i) निष्कोशनिर्गळदनर्गळनीरधार-
निस्त्रिंशनिर्मथननिस्रवदस्रपूरम् ।
नृत्यद्भयानकसशाकिनिडाकिनीक-
मभ्येति को नु समरङ्गणमा[4][त्तभीकः] ॥ ३२ ॥

---

टिप्पणी— कृत्वा विबुधाधिनेतुः इन्द्रस्य कुशलं क्षेम विस्तारयामि इति । अत्र पद्ये ' विचितावसृष्टान् ' इति पदमस्ति । ' क ' ' ग ' उभयोः प्रत्योः एवमेव पाठः अस्ति । परं तु अन्वयकरणे क्लेशो जायते । अतः यथामातृकं पाठः प्रदत्तोऽस्ति ॥ वसन्ततिलका वृत्तम् ।

i) निष्कोश इति—अप्रतिहतखड्गधाराघातोत्पन्नरक्तप्रवाहेण व्याप्तं, नर्तितभयङ्करशाकिनीडाकिन्यादिपिशाचादिसहितं रणरङ्गं यः कश्चिद्वीरः प्रविशति वा नैवेति भावः ॥ वसन्ततिलकावृत्तम् ॥

---

[1] त्वमद्यायुधागारं–क [2] ' प्रतीहारी ' इति स्थाने ' प्रकाशम् ' इत्यपपाठः अस्ति–' क ' प्रतौ ।

[3] होदवं–क

[4] क–ग–प्रत्योः ' आत्मभीकः ' इति पाठः अस्ति । सः अपपाठः । यतः आत्मभीकः इति पदमेवासाधु ! तत् ' आत्तभीकः ' इति भवेत् । ' आत्ता भीः येन सः ' आत्तभीकः ' इति बहुव्रीहिसमासः । ' शेषाद्विभाषा ' इति कप्प्रत्ययः ॥ अतः ' अत्र आत्तभीकः ' इति शोधितः पाठः उपरि दत्तः ।

**विदूषकः**—(सभयम्) विजेणं एव्व पेंखमि तुमं । किंदु तंकेमि णेणेवं तिथेण [1]पिअदमाए ओळोअणं तुह हविसदि । णेण तुए मअणोवि [2]पडिहदो हविंसदि ।

(विजयिनमेव पश्यामि त्वाम् । किं तु तर्कयाम्यनेनैव तीर्थेन प्रियतमाया अवलोकनं तव भविष्यति । अनेनैव मदनोऽपि पराजितो भविष्यतीति ।)

**राजा**—शृणुष्व तावत् ।

i) यदि [3]नयनपथेष्वनीकिनी
विजयिनमेव भवत्सखं निबोध ।
यदि मृगनयनाऽपि सा तदा
मदनमवेहि जितं पुरैव तं [[4]तु] ॥ ३३ ॥

(इति निष्क्रान्ताः सर्वे)

॥ इति प्रथमोऽङ्कः ॥

---

टिप्पणी—i) यदि नयनपथेष्विति । यदि सेना मदीयदृष्टिगोचरा, तदा विजयी ह्येवाहं, यदि हरिणाक्षी सा नयनगोचरा स्यात् तदा तव प्रत्यक्षमेव मदनः मया जित इति जानीहीति ॥

अनीकिनी—सेना ।

---

[1] पेअदमाए–क
[2] पडिहोदो–क
[3] नयनपथेर्यनीकिनी– क
[4] 'तु' इति योजितम् ।

  



## अथ द्वितीयोऽङ्कः

(ततः प्रविशतः गन्धर्वौ)

**एकः**—सखे सुन्दरक ! कुत आगतोऽसि ?

**सुन्दरकः**—अये कमलाकर ! महेन्द्र[1]सकाशात् सन्देशहरोऽस्मि दिक्पालकेषु।

**कमलाकरः**—विश्रान्तसमरसंरम्भैः यथापुरं स्थातव्यं भवद्भिरिति ।

**कमलाकरः**—किमसुरैः सन्धिरङ्गीकृतो महेन्द्रेण ?

**सुन्दरकः**—नहि नहि ।

**कमलाकरः**—कथं समरविश्रामः ?

**सुन्दरकः**—असुरजैनैव ।

**कमलाकरः**—कथमसहायेनापि सुनासीरेण रिपून् विजितानेव व्यादिशसि ।

**सुन्दरकः**—ससहायेनैव ।

**कमलाकरः**—कीदृशस्साह्यकारी ।

**सुन्दरकः**—(विहस्य) कुत्र वा कीदृगस्तीति न वेत्सि ? [2]यत्त्रिभुवनावन-धुरन्धरं पुरूरवसमपि जानन्नेवमुदाहरसि ।

**कमलाकरः**—(साश्चर्यम्) इदानीं स कुत्रास्ते । स किमकरोन्महाराजः ?

---

[1] महेन्द्रसंदेशात् –क [2] यत् त्रिभुवनावनसुन्दरं–ग

सुन्दरकः—i) पुरुहूतनिदेशभारभाजा
बलिना मातलिना ननू*पहूतः ।
धनुरेकसहायवानदैन्यं
दनुजानां परिहृत्य सैन्यमिन्धे ॥१॥

तदनु मदोत्कटविकटपरिपन्थिकूटविपाटनतोषितेन नमुचिद्विषा [1]सबहुमानमानीय सुधामासि, आवेश्य सिंहपीठेऽप्याकलय्य महोत्सव-माराध्य प्रियदानैः पुरं प्रति प्रहितः । किन्तु (इत्यर्धोक्ते)

कमलाकरः—सखे ! सावशेषमिव ते वचः । किं ममापि गोपनीयमस्ति ।

सुन्दरकः—(कर्णे एवमिव)

कमलाकरः—ii) महानयमुपसर्गः सुहृदोरपि सौहृदस्य, यदेकामिषे प्रीतिर्नाम । कथमस्य मानुषस्याप्यमानुष्यां प्रसक्तिः ।

सुन्दरकः—अनर्तयदमूमिन्द्रस्सभायामुत्सवाङ्कणे ।
मदनोऽपि मनोवृत्तिमनयोस्समनर्तयत् ॥ २ ॥

---

टिप्पणी—i) पुरुहूतेति । इन्द्रः राक्षसैः योद्धुं पुरूरवसः साह्यमपेक्ष्य तमानेतुं मातलिं प्रेषितवान् । बलशाली मातलिः इन्द्राज्ञानुसारात् राजानमाहूतवान् । स राजा एकेनैव धनुषा अकारुण्यं राक्षससैन्यं विजित्य रराज ॥ इन्धे-प्रकाशयामास ॥ अर्धसमं मालभारिणीवृत्तम् । 'ससजाः प्रथमे पदे गुरू चेत् । सभरा येन च मालभारिणी स्यात्, इति ii) उपसर्गः—पीडा, उत्पातश्च अर्थः ।

---

* 'क' प्रतौ 'उपभूतिः' इति, 'ग' प्रतौ 'उपभूतः' इति पाठो दृश्यते । उभौ पाठावपि अपपाठौ । गः 'उपहूतः' इति भवेत् । अतः शोधितः पाठः उपरि दत्तः । उपहूतः—आहूतः इत्यर्थः । [1] समुहमानं—क

**कमलाकरः**—इदानीं कुत्रास्ते साप्युर्वशी ।

**सुन्दरकः**—तदानीमेव अस्मत्कृते [1]सुहृदोः कलहो मा भूदित्यन्तर्हिता सुमेरुशिखरम् अवतीर्णेति श्रूयते । त्वं कुतः ?

**कमलाकरः**—आदिष्टोऽस्मि भगवता नारायणेन बदरिकाश्रमस्थेन—'कीदृशी वत्सायाः स्थितिरुर्वश्याः, कं प्रतिपन्ना वर्तत इति विज्ञाय आगच्छेति । तदेतद्वृत्तान्तं भगवते निवेदयामि । त्वमपि निदेशमशून्यं कुरु ॥

इति निष्क्रान्तौ

॥ [2]शुद्धविष्कम्भः* ॥

(ततः प्रविशत्युर्वशी सखी च)

**सखी**—हळा ! एदं एंव सुळगिळिणो सिहरं । जंत खु अळवणंदा णाम मंदाइणी अंदरिंखादो णिवडिअ [3]उंचळंदी पंवदचंकवंटिणं किदाहिसेअंविअ करेदिणं ।

([4]हळा ! एतदेव सुरगिरेः शिखरम् । यत्र खलु अलकनन्दा नाम मन्दाकिनी अन्तरिक्षात् निपत्य उच्चलन्ती पर्वतचक्रवर्तिनं कृताभिषेकमिव [5]करोत्येनम् ।)

**उर्वशी**—एंथ एंव विविंतरमणिंजे णिळीणे वंटावहे ।

(सखी अत्रैव विविक्तरमणीये निलीने वर्तावहे ।)

**सखी**—जह रोअदि [6]पिअसहीए ।

(यथा रोचते प्रियसख्यै ।)

(इत्यवतरणं नाटयतः ।)

---

टिप्पणी—*अत्र कमलाकरसुन्दरकनामकाभ्यां द्वाभ्यां मध्यमपात्राभ्याम् अत्र उर्वश्यामुभयोः इन्द्रनृपयोः प्रीतिजननविषयः, उर्वशीपरिस्थितिश्च सूचित इति शुद्धविष्कम्भः भवति ।

---

[1] सुहृदे कलहो–ग [2] विष्कम्भः–क [3] वुंत्सळदि–क

[4] 'हळा'—इति पदं 'क' प्रतौ नास्ति । [5] करोति–क [6] पिहअसहिए–क

उर्वशी– (स्पर्शसुखमभिनीय) सहि अहहे शीदळशीदळो मारुदपोदो अदिमेत्तं आणंदेदि । जं अणंदळपडिदमंदाइणीपवाहसी[1]अरपळंपळामिळिदो मंदाळसुळहिअएसो मंगं समं [2]खणमेंतेणेंव ओहरेदि ।

(सखि ! अहो [3]शीतलशीतल: मारुतपोतः अतिमात्रमानन्दयति । यदनन्तरपतितमन्दाकिनी प्रवाहशीकरपरंपरामिलितः मन्दारसुरभिश्लेषः मार्गं मं क्षणमात्रेणैव अपहरति ।)

सखी—इदो इदो (इतः इतः ।)

(इति परिक्रम्य मन्दारमूले उपविशति ।)

उर्वशी—(निर्वेदमभिनीय) अंब्रहे एसो [4]मंदाणिळोवि मं अदिमेत्तं बाहेदि । जं मअणतावोवरंताइ [5]अंगाइ ।

(अहो एष मन्दानिलोऽपि मामतिमात्रं बाधते । यन्मदनतापोपरक्तान्यङ्गानि ।)

सखी—एदिणा संदावेण [6]उंविंणा मा होदि । किंदु हिअअंठिदं एंव कहेदु होदि । [7]जेणा पडिकिआकळणंस मदी फुळइ ।

(एतेन सन्तापेन उद्विग्ना मा भव । किंतु हृदयस्थितमेव कथयतु भवती । येन प्रतिक्रियाकरणस्य मतिस्स्फुरति ।)

उर्वशी—(स्वगतम्) कहं कहेमि । ([8]कथं कथयामि ।)

(इति शृङ्गार[9]लज्जां निरूपयति ।)

सखी—हळा ! महवि गोवणिजं अंथि ।

([10]हला ! ममापि गोपनीयमस्ति ।)

उर्वशी—(प्रकाशम्) तह जदि [11]सं चं एंव भणामि तंसि एंव मअणमअण-सुंदळसळीळे तरुणसेहळे मह मणो ळंग ।

---

[1] शिअर–क [2] खणमेंतेनेंव–क [3] शीतळशीतळः–ग
[4] मंदानिळोवि–क [5] अंगाई–क [6] वुंविणा–क [7] जेण–ग
[8] 'कथं कथयामि' इति वाक्यं 'ग' प्रतौ नास्ति । [9] लज्जां रूपयति–क
[10] 'हला' इति पदं 'ग' प्रतौ नास्ति । [11] सत्सं एंव–क

(तथा यदि सत्यमेव भणामि तस्मिन्नेव. [1] मदनमदनसुन्दरशरीरे तरुणशेखरे मम मनो लग्नम् ।)

सखी—किंणु महेंदे । (किं नु महेन्द्रे)

उर्वशी—णहि णहि । [2]महिंदे एव । (नहि नहि । [3]महीन्द्र एव ।)

सखी—(विहस्य) कहं देविंए तुहवि [4]माणुसंमि अहिळासो ।
(कथं देव्या अपि तव मानुषे अभिलाषः)

उर्वशी—सो खु दिठमेंतो एंव मह णेंतजुअळंस अमिदसेअणं कळिअ मं सोहिणहिअअं किदवंतो ।
(स खलु दृष्टमात्र एव मम नेत्रयुगळस्य अमृतसेचनं कृत्वा मां स्वाधीनहृदयां कृतवान् )

सखी—(साश्चर्यम् ) हळा [5]णाळाअणंसमादो आअमणं अ ळहिअ पंथअंतं महेंदं उंझिअ एदंसिं अणुराओ दिढंति तंस एंव राएसिणो पुंणं एदं। तहवि सअळ[6]ळोअवाळकिळीडपूजितपादणहसिहरो माणणिंजो खु महेंदो ।
([7]हला ! नारायणाश्रमादागनमारभ्य प्रार्थ्यमानं महेन्द्रमुज्झित्य एतस्मिन्ननुरागो दृढ इति तस्यैव राजर्षेः पुण्यमेतत् । तथापि सकललोकपालकिरीटपूजितपादनखशिखरो माननीयः खलु महेन्द्रः ।)

उर्वशी—सहि णिंतदु एदं तंसवि एदं सवि महंदो विसेसो वंटदि । अंसखु महाळाअंस—

---

[1] मदनसुन्दरशरीरे-क । अत्र 'मदनमदनसुन्दरशरीरे' इत्येव छायापाठः युक्तः । प्रकृतपाठः 'मअण मअण सुन्दळसळीळे' इति वर्तते इति कारणेन । मदनस्याऽपि मदनः, स चासौ सुन्दरशरीरश्चेति विग्रहः ।

[2] महेंद एसो-ग [3] महेन्द्र एषः-ग

[4] 'माणुसंवि-ग, माणसंमि-क [5] नाळायणंसमादो-क

[6] ळोअपाळ-ग [7] 'हला' इति पदं 'म' प्रतौ नास्ति ।

“[1]पुंणेंदुव्विअ [2]वअणं कंणताविंटणेंतकमळे अ ।
महुमहुरं किल वअणं [3]मह [4]माणसदंपणंमि विअ [5]विळंगं ॥ ३॥

(सखि, तिष्ठत्वेतत् । तस्याप्येतस्यापि महान् विशेषो वर्तते । अस्य खलु महाराजस्य-
‘पूर्णेन्दुरिव वदनं कर्णान्ताविष्टनेत्रकमले च । मधुमधुरं किल वचनं मम
[6]मानसदर्पण इव विलग्नम् ॥)

सखी—तह जदि तंस एंव पंसं [7]उवगंछह्म । अळं एदिणा संदावेण ।

(तथा यदि तस्यैव पार्श्वमुपगच्छाव: । अलम् एतेन सन्तापेन ।)

उर्वशी—तह जदि महेंदंस तंसवि महंतो मं [8]उंदिसिअ विळोहो हविंसदि ।
कंस केण पळिहवो हविंसदिति ण जाणामि । अदो [9]व वुळंह्मि ।

(तथा यदि महेन्द्रस्य तस्यापि महान् मामुद्दिश्य विरोधो भविष्यति । कस्य केन परिभवो
भविष्यतीति न जानामि । व्याकुलास्मि ।)

सखी—एंथ एंव जदि [10]वंठह्मा दाणिं एंव साळणमुहादो जाणिअ महेंदो
बळादो ओहरिंसदि एंव ।

(अत्रैव यदि वर्तावहे इदानीमेव चारणमुखात् ज्ञात्वा महेन्द्र: बलादपहरिष्यत्येव ।)

उर्वशी—मा खु [11]भणाहि [12]एंवं । मह पिदुणो [13]सआसादो अदिमेंतं भीदो
वंटदि सोवि । अदो एंव वळादो ओहरिदुं [14]ण संकुणोदि ।

(मा खलु भण एवम् । मम पितु: सकाशात् अतिमात्रं भीतो वर्तते सोऽपि ।
अत एव मां बलादपहर्तुं न शक्नोति ।)
(तत: प्रविशति महेन्द्र: चित्ररथश्च)

महेन्द्र:—अये चित्ररथ ! अपि नामात्र वर्तते रमणीमणि: ।

---

1 पुंणेंदूविअ–क  2 वदणं–क  3 मम मानस–ग  4 माणसदंपणे विअ–क
5 विअळंगं–ग  6 मानसदर्पणे विलग्नम्–ग  7 उवगंतसंह्म–क
8 उंदिशिअ–क  9 वाहुळंह्मि–क  10 वंठह्म–ग  11 भण एंवं–ग
12 एंदं–क  13 सहासादो–क  14 ण संकु–क

चित्ररथः—देव! सत्यमेव भविष्यति चारणवचनम्। यत्सुमेरुशिखरे मन्दाकिनीझरोपान्तमन्दारवने सख्या सममुर्वशी वर्तते इति।

([1]पुरोऽवलोक्य) अयमेव सुमेरुः। इदमेव शिखरं च।

(इत्युभौ अवतरणं नाटयतः)

[2]चित्ररथः—(पुरो भूत्वा) देव! इत इतः।

(उभौ परिक्रम्य मन्दारवनप्रवेशं नाटयतः)

महेन्द्रः—अपि नाम तस्याः पदविन्यासधन्या स्यादियं वनभूमिः।

चित्ररथः—निपुणं [3]निरूपयावः।

(इति विचिनुतः)

चित्ररथः—देव वृक्षवाटिकायां दक्षिणतः। स्त्रीणामालाप इव श्रूयते।

महेन्द्रः—(सौत्सुक्यम्) भवत्वाकर्णयावः।

(इत्यवहितौ तिष्ठतः)

उर्वशी—अवि णाम मह विअ तस्सवि मणो मअणबाहामोहिदं हवे।

(अपि नाम ममेव तस्यापि मनो मदनबाधामोहितं भवेत्।)

सखी—को णु संसओ अंथवि, जं तेंळोक्काहरणहूदं [4]होदिं उद्दिसिअ कोणु जणो ण तंमेदि।

(को नु संशयोऽत्रापि, यत् त्रैलोक्याभरणभूतां भवतीमुद्दिश्य को नु जनो न ताम्यति।)

---

[1] पुरोऽवलोक्य'—इत्येतत्पूर्वं 'क' प्रतौ 'चित्ररथः' इति पदं दृश्यते। 'ग' प्रतौ तु 'चित्ररथ' इति स्थाने 'महेन्द्रः' इति पदमस्ति। अत्र चित्ररथ मार्गदर्शनेन महेन्द्रः आगच्छति। अतः स एव इन्द्रस्य 'अयमेव सुमेरुः' इत्यादिकथन-द्वारा मार्गं दर्शयतीति कृत्वा 'चित्ररथवाक्यान्येवैतानीति कृत्वा' 'चित्ररथ महेन्द्रपदे' विहाय (पुरोऽवलोक्य) इत्येव अत्र दर्शितः।

[2] चित्ररथः—इत्यारभ्य ............ मन्दारवनप्रवेशं नाटयतः इत्यन्तो भागः 'ग' प्रतौ लुप्तः। [3] निरूपयतः। [4] ओदिं उद्दिशिअ—क

**महेन्द्रः**—(श्रवणमभिनीय) अये ! चित्ररथ ! कं प्रत्येतदालपितं स्यात् ?

**चित्ररथः**—(स्वगतम्) भवतु यथा तथा वा प्रकृतमनु[1]सरामि । (प्रकाशम्)

i) 'यस्याज्ञा हरिदन्तकान्त[2]शिरसामम्लानमालायते
यद्भोगो मदनादिभोगविदिते सारोपमानायते ।
यस्यैवाद्भुतविक्रमस्त्रि[3]जगतीमाणिक्यदीपायते
तं त्वामद्य विहाय कुत्र हृदयं विन्यस्यते मान्यया ॥ ४ ॥'

**महेन्द्रः**—तथा यदि धन्यतमा एव वयम् । प्रिये एवमपि चिन्तितव्यम् ।

ii) 'यदा दृष्टासि दृष्टीनां सहस्रेणापि सादरम् ।
मम तत्प्रभृति प्रज्ञा मज्जत्युन्मज्जति [4]त्वयि ॥ ५ ॥

**चित्ररथः**—श्रोतव्यमुपर्यपि ।

---

टिप्पणी—i) **यस्याज्ञेति ।** अत्र चित्ररथः महेन्द्रप्रभावं वर्णयति । दिक्पतयः महेन्द्रस्यादेशं मालावत् शिरसि धारयन्ति । अस्य भोगोऽपि अनुपमः । अस्य अद्भुतपराक्रमः त्रिभुवने मणिक्यदीपवत् राराजते । अतः सा उर्वशी अवश्यं महेन्द्रमेवाभिलषतीति चित्ररथस्याभिमतम् ॥ अत्र द्वितीयपादस्य अभिप्रायः अस्पष्टः इति प्रतिभाति । गत्यन्तराभावात् यथामातृकमत्र प्रदत्तं ॥ अतिधृतिछन्दसि-शार्दूलविक्रीडितवृत्तम् ॥

ii) **यदा दृष्टासि इति**—हे उर्वशि, यदा त्वं मम दृग्गोचरी बभूविथ, तदारभ्यैव मदीया बुद्धिः तव विषये निमज्जनोन्मज्जनाभ्यां दोलायिता वर्तते इति । इन्द्रः सहस्रदर्शनः, सहस्रदृष्टिः, इति प्रसिद्धः ।

---

[1] सरामः—ग
[2] शिरसानम्लान—ग
[3] त्रिजगति माणिक्य—ग
[4] त्वया—क

उर्वशी—मएवि णादं [1]णंचणावसळे णिहिदणिहिददिठ्ठितणेण मह अंगएसु पुढमं एव्व अणुराअविळसिदं तस्स ।

(मयापि ज्ञातं नर्तनावसरे निहितनिहितदृष्टित्वेन मम अङ्गेषु प्रथममेव अनुरागविलसितं तस्य ।)

सखी—[2]सच्चं एदं । (सत्यमेतत् ।)

चित्ररथः—श्रुतं श्रोतव्यम् ।

महेन्द्रः—प्रिये जानामि प्रथममपि मय्यनुरागोपलब्धिं भवत्याः ।

i) 'यदीक्षिता दृष्टिशतैरवाङ्मुखी
प्रभाषिता सादरमप्यनुत्तरा ।
प्रलोभिता वस्तुभिरस्फुटाशया
तदेव ते मय्यनुरागसूचनम् ॥ ६ ॥'

चित्ररथः—(स्वगतम्) यदौदासीन्यतः कन्याचक्रे वक्रिमदर्शनं, तदे[3]तल्लज्जयैवेति मदनेनैष वञ्चितः । (प्रकाशम्) [4]हे देव! एवमेवैतत् ।

---

टिप्पणी—i) यदीक्षितेति । यदा अहं त्वां पश्यामि, तदा त्वं अवनतमुखी भवसि । त्वया सह सल्लपामि यदा, तदा तूष्णीं तिष्ठसि । अभिमतवस्तूनि दास्यामि इति प्रलोभनं मया यदि प्रदर्श्यते तदा तवाशयमेव न बहिः प्रकटयसि । एतैरहं जानामि-सर्वमेतत् मयि तवानुरागं सूचयतीति '—इति महेन्द्रः उर्वशीमुद्दिश्य कथयति ॥ जगतीछन्दसि वंशस्थवृत्तम् – 'जतौ तु वंशस्थमुदीरितं जरौ' विति तल्लक्षणम् (वृत्त-३ अ)

---

[1] णंत्तणावसळे–क
[2] संतं एदं–क
[3] लज्जयेवेति–क
[4] 'हे' इति पदं 'ग' प्रतौ नास्ति ।

'रम्भाकृतगृहारम्भमेना ते नाम किङ्करी।
दिधत्ते [1]हरिणी दास्यं क्व धत्ते गर्वमुर्वशी ॥ ७ ॥'

उर्वशी- हळा तहवि [2]पडिबंधपडिवादएण विहिणा संकासंवुळ हिअआ [3]मह पिदुणा दिण्णं [4]अंतधाणविज्जं गेह्णिअ [5]अंथ आअदह्मि ।

(हळा! तथापि प्रतिबन्धप्रतिपादकेन विधिना शङ्कासंकुलहृदया मम पित्रा दत्तामन्तर्धानविद्यां गृहीत्वा [[6]अत्र] आगतास्मि ।)

सखि— एदं एव [7]णिवुणं आचळिदं तुए त्ति जाणामि। जदि एवं ण कळेदि होदि तुह किदे [8]अण्णोण्णमित्ताणं अदिमेत्तं कळहो एव हवे ।

(एतदेव निपुणमाचरितं त्वयेति जानामि। यद्येवं न करोति [9]भवती तव कृते अन्योन्यमित्रयोः [10]तयोरतिमात्रं कलहो भवेत् ।)

महेन्द्रः— किं ममापि नाम महेन्द्रस्य मनुजसकाशात् भयमाशङ्कसे ।

i) 'निस्त्रिंशपातनिपतद्द्विजपक्षमूल-
नीरन्ध्रनिर्यदरुणारुणरक्त[11]पूराम् ।

---

टिप्पणी — i) निःस्त्रिंशपातेति। महेन्द्रस्य उक्तिरियम्। पुरा अहं मम खड्गप्रहारेण पर्वतानां पक्षान् निकृत्तवान् तदा क्षतात् सान्द्रम् अधिकारुणरक्तप्रवाहः प्रावहत्। अद्यापि पर्वतानां शरीराणि स्वकीयरक्तविशिष्टगैरिकादिधातुरसैः, प्राक्तनं मदीयं साहसकार्यं वर्णयन्तीति चेत् किं वक्तव्यं मत्पराक्रमविषये इति भावः।

---

[1] हरिणा दास्यं-ग
[2] पडिबंधपडिवादएण-क
[3] हिअअ मह-क
[4] अंतधानविज्जं-क
[5] अंध-ग
[6] 'अत्र' इति पदं 'क' 'ग' प्रत्योरुभयत्र नास्ति। अथापि 'अंथ' इति प्राकृतपाठः अस्तीति कृत्वा अत्र संयोजितम्।
[7] निवुणं-क
[8] अणोरिणमित्ताणं-क
[9] भवति तव-क
[10] 'तयोः' इति पदं 'क' 'ग' प्रत्योरुभयत्र दृश्यते। परं तु अस्य प्राकृतपाठः उभयत्र नास्ति।
[11] पूरम्-क

अद्यापि धातुरसरञ्जितनिर्भराख्या-
मातन्वते हि तनवोऽपि कुलाचलानाम् ॥ ८ ॥ '

चित्ररथः – (स्वगतम्) अहो महान्धता नाम एतस्य ।

ii) ' पशुमारममारयन्न चेद्वसुधे [श] त्रिदशारिमण्डलम् ।
क्व गतेत्यमरावती क्व वा [1]सुर[राज्ञी]त्यपि कस्य वाग्भवेत् ॥९॥ '

उर्वशी—[2]हळा ! [3]णंतं दिवंवि तंसिं एंव णिहिदमाणसाए मह किं वि ण [4]रोअदि हिअआए ।

([5]हला ! नक्तंदिवमपि तस्मिन्नेव [6] निहितमानसायाः मम किमपि न रोचते हृदयाय ।)

---

निस्त्रिंशः-खड्गः । नीरन्ध्रः-सान्द्रम् ।

शक्करीछन्दसि-वसन्ततिलकावृत्तम् ।

आतनुते आतन्वाते आतन्वते–इति, वर्तमाने लट् आत्मनेपदम् तनु-विस्तारे धातुः । आङ्-उपसर्गः ।

ii) पशुमारमिति । वसुधेशः-पुरूरवाः पशुमारम् पशून् मारयति यथा तथा-पशुमारम् इति णमुलन्ताव्ययम् यथा पशून् मारयति तथा राक्षसान् न अमारयद्यदि, तदा ' अमरावती क्व गता, अधुना क्वास्ति? सुरराज्ञी-शची क्व-कुत्र, इति प्रश्नस्य उत्तरं कः दास्यति स्म । न कोऽपि । राजा स्वकीय-पराक्रमेण देवान् ररक्ष । अथापि सुरेन्द्रोऽयं गर्विष्टस्सन् असन्तं स्वकीयं पराक्रमं प्रदर्शयतीति विपर्यास इति ॥ अर्धसमं ललितावृत्तम्-' ससजा विषमे यदा गुरुः सभरा स्याल्ललिता समे लगौ ' इति लक्षणम् (वृत्त २-४ अ)

---

[1] ' सुरराणी ' त्यपपाठः 'क' 'ग' प्रत्योः दृश्यते सः सुरराज्ञीति शोधितः ।
[2] 'हळा'–इति पदं 'ग' प्रतौ नास्ति । [3] णंतंदिवंमिमि तंसि–क
[4] रोचेदि–क [5] 'हला'–इति पदं 'ग' प्रतौ नास्ति ।
[6] निहितनिहितमानसायाः–क, ग

सखी - तारीसो खु [1]रूवलंछी तंस [2]तुए लंचिदा आसी ।

(तादृशी खलु रूपलक्ष्मी: तस्य त्वया लक्षिताऽऽसीत् ।)

महेन्द्रः—अयि प्रिये! अद्य खलु ।

(i) 'सफला मम रूपसंपदेषा [3]सफलं चापि बभूव भाग्यमेतत् ।
यदिह त्वमुदारधीरपि [4]स्वे हृदये मान्यतमं तनोषि यन्माम् ॥१०॥'

चित्ररथः—(स्वगतम्) कथमविदितपरिणाम एव, वचनोपन्यासः ।

(प्रकाशम्) देव ! इदं [5]त्वयेवानुरक्ता । तद्भवता माननीया वर्तते ।

उर्वशी—अदो एव्व [6]तेलोक्कवल्लहं वि सुलवल्लहं उज्झिअ णलं वि तं एव्वं ।

[7]उदिसिअ मह मणो धावेदि ।

(अत एव त्रैलोक्यवल्लभमपि सुरवल्लभमुज्झित्व नरमपि तमेवोद्दिश्य मम मनो धावति ।)

सखी—[8]सुहावो खु इत्थिआणं [9]रूवरंततणं ।

(स्वभाव: खलु स्त्रीणां रूपरक्तत्वम् ।)

महेन्द्रः – (स्वगतम्) (सविषादम्) अहो महान् प्रमादः । यदन्यथा-वृत्तिर्मनोवृत्तिरेतस्याः । वयमन्यथा संभावयाम इति ।

---

टिप्पणी—i) सफलेति--हे उर्वशि-त्वमुदारबुद्धिः । अतः त्वमद्य तव हृदये मां गौरवान्वितं धत्से । अनेन अद्य मदीया रूपसंपत् सफला जाता । मदीयं भाग्यमपि सफलमेव जातम् अहमेव धन्यः इति महेन्द्रः मन्यते ॥ अर्धसमं मालभारिणीवृत्तम् ।

'ससजाः प्रथमे पदे गुरू चेत् । सभरा येन च मालभारिणी स्यात्' इति तल्लक्षणम् ।

---

1 रूवंलंचि–क　2 तुएं लंचिदा–क　3 सफलं चाविवभूव–क
4 स्वहृदये–ग　5 त्वयैवा–ग　6 तेलंक्कवंलहंवे–क
7 उंदिशिअ–क　8 सुहवो–क　9 रूवंरतंतणं–क

([1]प्रकाशम्) चित्ररथ ! श्रुतं भवता ।

**चित्ररथः** — (स्वगतम्) अधुना स्फुटीकृतो मनोरथः । दुर्मुखश्च भर्ता । किं करिष्यामहे वयमेनमनुनेतुम् । (प्रकाशम्) भवतु उपर्यपि [2]शृणुमः ।

**सखी** — हळा ! [3]सअ[ळ][4]दिपाळमउडमाणिक[5]नीळाजिदपादपंळवंतंवि महेंदं उंझिअ कीरिसो एसो पेमाणुबंधो [6]मानुसंमि ।

([7]हला ! सकलदिक्पालमकुटमाणिक्यनीराजितपादपल्लवन्तमपि महेन्द्रमुज्झित्य कीदृश एष प्रेमानुबन्धो मानुषे ।)

**उर्वशी**—सहि एंव मा भणाहि —

**वदणं सहासमुद्धं [8]वअणं महुमहुळदाविळास[9]हळं ।**
**[10]नवजंवणं सळीळं तस्स पुळोइअ कहं [11]मणो चलो ॥ ११ ॥**

अविअ—ळोओ एंव जाणादि तंस [12]एदंसवि अंदरं । जं असुळसंहळणेण पडिठाविदं सुळकुळं णेण महाळाएणेंति ।

(सखि मैवं भण)

[i) वदनं सहासमुग्धं वचनं मधुमधुरताविलासहरम्
नवयौवनं शरीरं तस्य विलोक्य कथं [13]मनश्च्य*वते ॥ ११ ॥

---

टिप्पणी — **वदनमिति** । *च्यवते-गच्छतीत्यर्थः । च्युङ्-गताविति धातुः । लट्—आत्मनेपदम् ॥ i) वदनं सहासमुग्धं—स्मेरमुग्धा-

---

1 '(प्रकाशम्) चित्ररथ श्रुतं भवता'-इति भागः 'ग' प्रतौ अन्यथादृश्यते-तद्यथा—' संभावयाम इति । चित्ररथ-(स्वगतम्) श्रुतं भगवता अधुना स्फुटीकृतो मनोरथः इति ।—अयं च भागः संशोध्य प्रदत्तः उपरि । 2 शृणुवः—क

3 क ग प्रत्योः—'सअंदि-इत्यस्ति । तत्र 'सअळदि' इति शोधितम् ।

4 दिपाळ—क 5 णीळाजिद—ग 6 मानुषमि—क

7 'हला' इति पदं 'ग' प्रतौ नास्ति । 8 वथगं—क 9 हाळं-क

10 नूवजोंवणं—क 11 मणो—च वै—क 12 एंदंस—क 13 मनश्चलति-ग

अपि च—लोक एव जानाति तस्याप्येतस्यान्तरम् । यदसुरसंहरणेन प्रतिष्ठापितं सुरकुलमनेन महाराजेनेति ।]

महेन्द्रः—श्रुतमनभिज्ञायाः प्रलपितम् । 'यन्नियोज्यनियोजनं कार्येष्वपकर्ष' इति ।

ii) 'निश्शेषशोषितवलासुरदर्पणे रे
निर्धूतपार्वतिकगर्वकलाविकारे ।
निश्चीय निर्मलतरेऽपि मयि प्रमादात्
अद्याप्यवद्यमसदेव [1]तनोषि धीरे ॥ १२ ॥'

टिप्पणी—ननम् । मधुनः माधुर्यविलासहारि वचनम् । कर्णानन्दकरं मनोल्लासकरं चेति यावत् । नवीनतारुण्यं शरीरम् । एतादृशरूपसंपन्नां तां दृष्ट्वा कस्य मनः न च्यवते । अवश्यं च्यवत एव । सर्वजनहृद्यं रूपसौन्दर्यं तस्येति भावः ।

ii) निश्शेषशोषित इति । निःशेषं यथा तथा शोषितं वलासुरस्य दर्पणं—येन, तस्मिन् । दर्प एव दर्पणमिति ल्युडन्तम्, सम्पूर्णशोषितवलासुर-गर्वे मयि । पर्वतस्यायं पार्वतिकः । गर्वस्य कला, तस्याः, विकारः, पार्वतिकश्चासौ गर्वकलाविकारश्च । निर्धूतः पार्वतिकगर्वकलाविकारः येन तस्मिन् मयि । पर्वतगर्वनाशके मयि । (पर्वतानां पक्षच्छेदकः इन्द्रः इति प्रथितः) । निर्मलतरेऽपि शुद्धतरेऽपि मयि प्रमादात् अनवधानतया अद्यापि अधुनाऽपि असत्—अविद्यमानम् अवद्यं गर्ह्यं हे धीरे ! तनोषि—विस्तारयसि किम् । शूरे, वीरे, प्रथिते, शुद्धे च मय्यपि दोषारोपणं न युक्तमिति भावः ॥ शक्करीछन्दसि वसन्ततिलकावृत्तम् ॥ 'उक्ता वसन्ततिलका तभजाजगौ गः' इति लक्षणम् ॥ (वृत्त र ३ अ)

[1] 'तनूषि' इत्यपपाठः ग प्रतावस्ति

**चित्ररथः**—[1](स्वगतम्) अहो संविधानं विधातुः। यदनुरक्तायामपि रक्तनामुत्पाद्य ग्लपयति सुरपतिमिति। (प्रकाशम्) देव! सम्यक् खलु अवगन्तव्यं मनः स्त्रीणाम्।

**महेन्द्रः**—न खल्ववशिष्टमस्ति जिज्ञासितस्य।

i) **कुलं न खलु काश्यपं न गणितं क्रतूनां शतं**
**निरस्तमखिलेशता न खलु मानसे चिन्तिता।**
**ममाद्य खलु मुग्धया मनुजमात्रजाताशया**
**कयाचिदिव कस्यचिज्जयति दुर्विलासो विधेः॥ १३॥**

तत्किं कुर्मः काममहतकमुपशमयितुम्।

(इति बाष्पं विकिरति।)

---

टिप्पणी—i) कुलं न खल्विति। मनुजमात्रजाताशया-केवलं नरे अनुरक्तयानया मुग्धया - कयाचित् साधारणस्त्रिया कस्यचित् यःकश्चित्पुरुषस्य कुलादिकं यथा न गणितं तथा अद्य मम काश्यपं कुलं न परिगणितम्। क्रतूनां शतं न गणितम् अपि तु निरस्तमुत्सारितम्। अखिलेशता सुराधिपत्यमपि मानसे नालोचितम्। अहो विधेः दुर्विलासः जयति सर्वोत्कर्षेण राजत इति॥ मदीयं कुलादिकं तुच्छीकृत्य यःकश्चिन्नरे अनुरक्तेति चेत् विधिवैपरीत्यम् अवर्णनीयमिति भावः॥ 'कयाचिदिव कस्यचित्' इत्युक्तत्वात् अत्र औपम्यसत्वात् उपमालङ्कारः। 'दुर्विलासो विधेः जयति' इति वाक्यस्य कुलं न खल्वित्यादिभिः समर्थनमत्र कृतमिति अर्थान्तरन्यासालङ्कारश्च। अर्थान्तरन्यासालङ्कार एवात्र प्रधानः। उपमालङ्कारस्तु अङ्गभूतः॥ अत्यष्टिच्छन्दसि पृथ्वीवृत्तम्। जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः इति लक्षणम्॥ (वृत्त र-३-अ)

---

[1] स्वगतम् इति पदं क प्रतौ नास्ति।

चित्ररथः—कथमतिभूमिं गतोऽस्य परितापः ।

(विचिन्त्य) ([1] सधैर्यम् ।)

देव ! मया कोऽप्युपायश्चिन्तितः एतस्या उपगमे भवतः ।

महेन्द्रः—(सौत्सुक्यम्) कथय कथय ।

चित्ररथः—(कर्णे) एवमिव ।

महेन्द्रः—(सवितर्कम् ) अहो एतदप्यङ्गीकरणीयम् ।

धिगस्तु सुमनस्ततिप्रणतिपात्रमैन्द्रं पदं
धिगप्यनु [2]दिनाप्सरस्स्ववदनानुभूतं वपुः ।
धिगस्य निखिलाचलप्रवरपक्षविध्वंसन-
[3]प्रचण्डमदमायुधं मनुजतैव यत्साधनम् ॥ १४ ॥

चित्ररथः—[4]नैसर्गिकोऽयं प्रभूणां पन्थाः । यत्कुः ना तेनापि कार्य-साधनमपि ।

उर्वशी—सहि [5]अदिमेंतं किळंतह्मि मअणेण । ता [6]एदंसिं ळदाकुंजें [7]ईसिदिअ विंसामसुहं [8]अहिळसंमि ।

(सखि, अतिमात्र क्लान्ताऽस्मि मदनेन । तस्मादेतस्मिन् लताकुञ्जे ईषदिव विश्रामसुखमभिलषामि ।)

टिप्पणी—धिगस्त्विति । अधुना मानववेषस्वीकारेणैव उर्वशीं जेतव्यमिति चेत् तदा मनुजतैव साधनं सम्पन्नं तस्याः ग्रहणे । तर्हि मदीयं यदैन्द्रं पदं देवसमूहप्रणतियोग्यं, तत् व्यर्थम् । मदीयं शरीरं प्रतिदिनं अप्सरोभिः सेव्यते । ताभिस्सह इदं सुखमप्यनुभवति । मम आयुधमपि न

1 स्वधैर्यम्–क 2 दिताप्सर–ग 3 प्रचण्डमृधमायुधं मनुजितैव–क
4 नयसर्गिकोऽयं–क 5 अंदिमेंतं किंळंतह्मि–क 6 एंदसि–क
7 ईसेविअ–ग 8 अहिळसंमि–क

सखि—[1]जह रोअदि [2]देंविए ।

(3 यथा रोचते देव्यै)

चित्ररथः—देव ! आवामपि मनुष्यवेषेण गच्छावः ।

महेन्द्रः—(सचिन्ताश्वासम्) यद्रोचते प्रियसुहृदे ।

(इति निष्क्रान्तास्सर्वे)

(इति द्वितीयोऽङ्कः)

---

टिप्पणी—

सामान्यम् । सर्वेषां पर्वतानां पक्षच्छेदने कठोरमदं च वर्तते । अथापि तां जेतुं सर्वमेतत्साधनं नालमिति चेत् किमेभिः । मदीयं सुराधिपत्यं प्रति, अप्सरानुभूतशरीरं प्रति पर्वतपक्षच्छेदकायुधं प्रति च धिक्। सर्वमेतद्विना मनुजरूपेणैव साधनीयमिति चेत् किं वक्तव्यमिति । अत्र सर्वत्र धिक्प्रयोगात् "उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥" इति नियमानुसारात् (सि. कौ. कार. प्र) द्वितीया भवति ॥ अत्यष्टिछन्दसि पृथ्वीवृत्तम् । "जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः "इति लक्षणम्" (वृत-र-३ अ)

---

[1] जह–क [2] देंविए–क [3] यद्रोचते–क





## अथ तृतीयोऽङ्कः

(ततः प्रविशति राजवेषधारी महेन्द्रः चित्ररथश्च)

**महेन्द्रः**—भगवन् मदन ! नमस्ते सपरिवाराय सायुधाय ।

[1]श्रुतिरिममहल्यायै जारं जनं वदति स्फुटं
प्रसदनवशात् यस्याभूवं रवेण च कुक्कुटः ।
इदमपि [2]सहस्राक्षत्वं मे यदीयवरादभू-
दिह च मनुजाकारस्तेन त्वयैव जितं जितम् ॥ १ ॥

---

टिप्पणी—श्रुतिरिममिति । मन्मथमुद्दिश्य महेन्द्रस्य उक्तिरियम् । 'अहल्यायै जारम्' इति भगवती श्रुतिः स्पष्टं कथयति माम् । यस्य तव अनुग्रहवशादेव रवेण च कुक्कुटोऽहमभूवम् अधुना इदं सहस्राक्षत्वमपि त्वदीयवरादेवाऽभूत् । अर्थात् तव हेतोरेव मम सहस्राक्षत्वमिति मन्मथं व्यङ्ग्येन दोषोद्धाटनम् । इदानीमपि मया मनुजवेषस्वीकारोऽपि तव कारणादेव इति चेत् त्वयैव जितं न मया जितमिति । तव प्रभावः अधिकतमः इति भावः । उर्वशीदर्शनेन कामपीडितः इन्द्रः तां लब्धुं राजवेषं स्वीकृतवान् । एतत्समये स इन्द्रः स्वकीयामवस्थां कथयति । पुराऽपि अहं अहल्यासङ्गमात् 'अहल्याजारः' इति प्रसिद्धः अभूवम् । गौतममन्यत्र गमयितुं कुक्कुटवत् अकूजम् । ततः गौतमशापेन सहस्राक्षः समभवम् । अथाऽपि अधुना

---

1 श्रुतिरियम्-ग  2 सहस्राक्षित्वं-क

टिप्पणी—उर्वश्युत्कण्ठितः कामपीडितश्च मनुजवेषं स्वीकृतवान् इति चेत् तत्र प्रभावः वर्णनातीतः इति मन्मथं प्रति कथयति ।

"अहल्याजारः" इति इन्द्रस्य नाम । अत्र विषये सदर्थः असदर्थश्च विद्यते । हलेन कृष्टा भूमिः हल्या । न हल्या अहल्या अकृष्टा भूमिरित्यर्थः । तामिन्द्रः वर्षणेन कर्षणयोग्यत्वेन संस्करोतीति कृत्वा लोकैश्वर्यप्रदः जगदानन्दकरश्च इत्यर्थः एकः वर्तते ।

अपरश्च अर्थः अहल्या जारः इति चेत् अहल्यायाः उपपतिः इन्द्रः इति प्रसिद्धः । 'पुरा इन्द्रः गौतमवेषेण अहल्यासमीपं गत्वा तस्याः सतीत्वं ननाश । ततः गौतमशापेन सा अदृश्या बभूव । ततस्त्रेतायुगे श्रीरामचन्द्रः यदा गौतमाश्रममाजगाम तदा सा पुनः पूर्वरूपं प्राप्तवती । इन्द्रः वृषणहीनस्सञ्जातः । पुनः मेषवृषणयुक्तश्च बभूव । सहस्राक्षश्च सम्पन्नः इति च कथा वाल्मीकिरामायणे बालकाण्डे वर्तते ।

"अहल्यायै जारः"—इत्यस्मिन् विषये बहुधा विप्रतिपत्तिः दृश्यते । विषयोऽयं कुत्र कुत्र उक्तः इति सङ्ग्रहेणोच्यते ।

i) तैत्तिरीयारण्यके प्रथमप्रपाठकस्य द्वादशानुवाके मन्त्रोऽयं पठितः—

'सुब्रह्मण्योꣳ सुब्रह्मण्योꣳ सुब्रह्मण्यम् ।

इन्द्रागच्छ हरिव आगच्छ मेधातिथेः ।

मेषवृषणश्वस्य मेने ॥ २ ॥

गौरावस्कन्दिन्नहल्यायै जार । कौशिकब्राह्मण गौतमब्रुवाण ' इति

अस्य मन्त्रस्य सायणभाष्यमिदं दृश्यते ।

'सुब्रह्मण्योमित्येकामिति । पाठस्तु 'सुब्रह्मण्योꣳ गौतमब्रुवाण' इति । शोभनं ब्रह्म सुब्रह्म वेदः । तस्मै हितः 'सुब्रह्मण्यः' इन्द्रः ।

टिप्पणी—ॐ इति सम्बोधनार्थः। हे सुब्रह्मण्येति त्रिरभिधानमादरार्थः। तद्गुणकथनेन स्तुत्यर्थमिन्द्रादिपदैः सम्बोधनम्।

हे इन्द्र! परमैश्वर्ययुक्त, इह कर्मणि 'आगच्छ'। 'हरिवः' हरिनामकावश्वावस्य विद्येते इति हरिवान् तस्य सम्बोधनम्। शुक्लकृष्णपक्षद्वावेव तदीयाश्वत्वं प्राप्य हरिशब्देनोच्येते। तादृश हे हरिवः, इह कर्मणि आगच्छ। 'मेधातिथेः' मेधातिथिर्नामकः कश्चिदृषिः कण्वस्य पुत्रः! तत्सम्बन्धिन्, हे मेष, तूप, वृषणश्वो नाम कश्चित् मुनिः। तस्य सम्बन्धिनी या मेनकाख्या दुहिता तां मन्यमाने तस्मिन्नर्थे 'वृषणश्वस्य मेने' इति सम्बुद्ध्यन्तं प्रयुक्तम्। 'गौरावस्कन्दिन्' गौरमृगो भूत्वा यागमध्ये समागत्य सोमं पीत्वा हे विनाशक! तदेतत्सर्वं शाखान्तरब्राह्मणे समाम्नातम्। हरिव आगच्छेति पूर्वपक्षावपरपक्षौ वा इन्द्रस्य अश्वौ। ताभ्यां ह्येष सर्वं हरतीति मेधातिथेर्मेषेति। मेधातिथिं काण्वायनिं मेषो भूत्वा जहार। वृषणश्वस्य मेन इति वृषणश्वस्य मेनका नाम दुहिता। तामिन्द्रश्चकमे। गौरावस्कन्दिन्निति गौरमृगो भूत्वा राजानं पिब हीति। 'अहल्यायै जार' अहल्या गौतमस्य भार्या। तस्या इन्द्रो जार इति पुराणे प्रसिद्धम्। 'कौशिकब्राह्मण' कौशिकनामा कश्चिन्महर्षिः। तस्य समीपे ब्राह्मणवेषेण समागतवान्। 'गौतमब्रुवाण' गौतमो महर्षिः। तं प्रसादयितुं स्तुतिं कृतवान्। तथाविध हे इन्द्र आगच्छेत्यन्वयः॥

ii) षड्विंशब्राह्मणस्य प्रथमाध्याये प्रथमखण्डे—'सुब्रह्मण्यों' इति मन्त्रार्थविवरणसन्दर्भे सायणाचार्यभाष्यमेवमस्ति—'अथ ह सुब्रह्मणि देवेभ्यः उत्क्रान्ते सति अनन्तरमेव स यदा व्युत्क्रमिषुः ब्रह्मदेवा वस्वादयो यज्ञेन पर्यगृह्णत परिगृहीतवन्तः।

अत्र किं ब्रह्मशब्देनोच्यते किञ्च सुब्रह्मशब्देनेति। अग्निर्वै ब्रह्मशब्दवाच्यः मुख्यत्वात्। अग्निमुखा वै देवा इति श्रुतेः। असौ

6

टिप्पणी—चिदात्मने क आदित्यः सुब्रह्म च एतन्मन्त्रः। तथा चेन्द्रं प्रकृत्य स्मूयते असावादित्य इति। मन्त्रान्तरमपि। 'यदद्यमच्च वृत्रहान्नुदगा अभि सूर्य। सर्वं तदिन्द्र ते वश' इति इन्द्रस्य च सुब्रह्मत्वम्। सर्वे देवाधि-पत्याकृते देवाः किमकारिषुरित्यत्राह। तदुक्त्वा तं सुब्रह्मदेवा यज्ञसम्बन्धौ सन्धातरि वक्ष्यमाण उत्करदेशे अन्वैच्छन् अन्वेषणमकार्षुः कामो यज्ञस्य सन्धिस्तत्राह। अयमेव यज्ञस्य सन्धिः सन्धाता यत्र यस्मिन् देशे सोम-मुद्धृत्य कीर्यन्ते पांशवोऽस्मिन्निति उत्करः वेदेरुत्तरपूर्वभागः। प्रकृते किमायातमित्यत आह—यज्ञस्य सन्धिरुत्करः। तस्मात्तत्रोत्करे देशे तिष्ठन् सुब्रह्मण्यो नाम ऋत्विक् सुब्रह्मण्यां सुब्रह्मणि साधुरिति निगदो निगतस्त्रीलिङ्गः तामर्हति तदुद्देश्यां देवतामिन्द्ररूपामाह्वयतीत्यर्थः। आह्वानप्रकारं दर्शयति सुब्रह्मण्योमितिनदस्त्रीलिङ्गमिवादानपूर्वकं त्रिराह त्रिः पठेत्। कुत इत्यत्राह हिशब्दो हेतौ। यस्माद्देवाः त्रिषत्याः त्रीणि मनोवाक्कायकर्माणि सन्त्यन्य संवादीति येषां तेषां ते त्रिषत्या तस्मादतिग्शस्तं त्रिराट्वान् कर्तव्यमित्यर्थः। हेतुवन्निगदोऽयमर्थवादः। तेन ह्यन्नं क्रियत इतिवत् न तु हेतुः। हेतुत्वे हेतुसापेक्षे च नैरपेक्षलक्षणम् न संभवेदिति निगदशेषमुपादाय व्याचिख्यापयामास प्रथमं तावदिन्द्रागच्छेति पदद्वयं व्याख्यातुमुपादत्ते इन्द्रागच्छेति। तद्व्याचष्टे। यदाहेन्द्रागच्छेत्येतद्वा अस्य प्रत्यक्षं नाम तेनैवैनं तदाह्वयति इन्द्रागच्छेति सुब्रह्मण्याय यदाह इदमेव अस्य इन्द्रस्य प्रत्यक्षं नामं तदा तेनैव एवं प्रकृतत्वादन्त्र देशाविषय एनादेशः। एन-मिन्द्रमाह्वयति पुनर्निगदशेषमाख्याति हरिव आगच्छेति। हरिवः मतुवसो रुः सम्बुद्धौ, छन्दसीति नकारस्य रुः। हरि च नाम तद्व्याचष्टे शुक्लकृष्णपक्षौ वा इन्द्रस्य हरी हरिताश्वानामादित्यात्मकत्व दिन्द्रस्य तयोर्हरित्वप्रतिपादनं हि यस्मात् ताभ्यां पूर्वपक्षापरपक्षाभ्यामिदं सर्वं जगद्धरति कालात्मकेन नियच्छतीति निगदशेषान्तरमुपादत्ते मेधातिथेर्मेषेति।

टिप्पणी—तद्व्याचष्टे मेधातिथिं हरति। काण्वायनं कण्वस्य युवापत्यं मेधातिथिनामानमृषिमिन्द्रो मेषरूपधरो भूत्वा जहार स्वर्गं निनाय किल तथा बह्वृचा आमनन्ति। 'इत्था धावन्तमद्रिवः काण्वं मेधातिथिं मेषोभूतोऽभियं नरः। अतो मेधातिथेर्मेषेतीन्द्रः सम्बोध्यते पुनरपि निगदशेषमुपादत्ते वृषणश्वस्येति। मेनास्यस्य वृषणश्वस्य कश्चिन्मेनका नाम दुहिता आस बभूव। तां मेनकाम् इन्द्रश्चकमे ह कामितवान्। "मेनाभवं वृषणश्वस्य सुक्रातो इति नामान्तरमुपादत्ते गौरावस्कन्दिन्निति। तद्व्याचष्टे। इन्द्र किल गौरमृगो भूत्वा अरण्यादवस्कद्य, स्कन्दिर्गत्यर्थः राजानं सोमं, 'सोमो वै राजा' इति श्रुतेः, पिबति स्म पयो गौरावस्कन्दी चेति कर्मधारयसमासेन गौरावस्कन्दिन्निति इन्द्रः सम्बोध्यते। नामान्तरमुपादत्ते—'अहल्यायै जारेति। बहुलवचनात् षष्ठ्यर्थे चतुर्थी। 'अहल्याया जार' इत्यर्थः। तद्व्याचष्टे—अहल्या ह इन्द्रः किल मित्राया दुहिता मैत्रेयी, तस्याः अहल्याया जारः उपपतिरास बभूव। तद्व्याचष्टे—कौशिकः कुशिकगोत्रोत्पन्नः कश्चित् ब्राह्मणः एनां प्रकृतामहल्याम् उपन्येति स ह। इण् गतौ लट्। सु इति परोक्षे लिट्। उपनीत उपसर्गेण उपयन् उपगच्छन् उपयेमे किलेत्यर्थः। तस्याः जारस्सन् तद्भर्तृस्थाने तिष्ठतीति कौशिकब्राह्मणेत्युपचारादामन्त्र्यते।

अथ नामान्तरमुपादत्ते गौतमब्रुवाणेति। गौतम इति ह ब्रुवाणः। यद्वा गोतमरूपेण चरन् गौतम इति शब्द्यमाने गौतमब्रुवाणः। ब्रुवतेः कर्तरि व्यत्ययेन कर्मणि शानच्। तस्य सम्बोधनं गौतमब्रुवाणेति। तद्व्याचष्टे—देवासुरा देवासुरा ह। देवाश्चासुराश्च किं संयत्ताः परस्परं योद्धुमासक्ताः आसन् बभूवुः। तानन्तरेण तेषां मध्ये। अन्तरान्तरेण युक्त इति द्वितीया। गौतमो नाम ऋषिः शश्राम। श्रममुपाविशन्। अत तं गौतममुपेत्योवगम्येन्द्रः एवमुवाच असुरा भवन्तम् बाधेरन्। अत

टिप्पणी—इहैवास्माकं स्पृशंश्चरो भूत्वा भवान् भवत्विति। एवमुक्तवन्त-मिन्द्रमृषिराह—अहमेव चाररूपेण वर्तितुं नोत्सहे उत्साहं न करोमीति।

अथ गौतमवचनानन्तरमिन्द्रो ब्रवीति। अहं भवतो रूपेण स्पृशस्सन् चराणीति, तदनुमन्यते भवानिति। पुनर्गौतमो ब्रवीति-हे इन्द्र त्वं तथा येन प्रकारेण चरितुं मन्यसे तथा चरेति। पश्चादिन्द्रः तथा चरेदिति शेषः। स इन्द्रः तत्तदानीं गौतमोऽहमिति स्वयं वदन् गौतमरूपेण गौतम इति जनैरुच्यमानो वा चचारेति॥ इत्यादि।

iii) लाट्यायनश्रौतसूत्रेप्रथमप्रपाठके – तृतीयायां खण्डिकायां प्रथमसूत्रे-इन्द्रस्तुतिसन्दर्भे कथिते मन्त्रे 'अहल्यायै जार' इति निर्देशः कृतः तद्यथा—"आतिथ्यायां संस्थितायां दक्षिणस्य द्वारबाहोः परस्तात्तिष्ठन्नन्यर्वेदि-देशे अन्वारब्धे यजमाने पत्न्याश्च सुब्रह्मण्योमिति निरुक्ता निगदं ब्रूयात्, 'इन्द्रागच्छ' हरिव आगच्छ। मेधातिथेर्मेषवृषणश्वस्य मेने, गौरावस्क-न्दिन्नहल्यायै जार, कौशिकब्राह्मण गौतमब्रुवाणैतावदहे सुत्यामिति यावदहे स्यात्' (ला.श्रौ.सू. १प्रपा-३खं-१सूत्रम्)

उपरि सर्वत्र इन्द्रस्य प्रशंसा कृता।

iv) 'अहल्यायै जारः'—इत्यस्य अपरोऽर्थः सूर्यः इति। सूर्यः सहस्रांशुः, सहस्रनेत्र इत्यादिपदैः प्रसिद्धः। 'निरुक्ते-(३-३-४)—'जार आ भगम्'—जार इव भगम् आदित्योऽत्र जार उच्यते रात्रेर्जरयिता। स एव भासाम् — इत्युक्तम्। एवमेव निरुक्ते-(२-२-२)— 'सुषुम्नः सूर्यरश्मिः चन्द्रमा गन्धर्व इत्यपि निगमो भवति। सोऽपि गौरुच्यते...... सर्वेऽपि रश्मयो गाव उच्यन्ते' इत्युक्तम्। माध्यन्दिनशाखीये शतपथ-ब्राह्मणे चतुर्थकाण्डे पञ्चमप्रपाठके षष्ठे ब्राह्मणे (शत-ब्रा-४-५-६) एवमुक्तम्—'तं वाऽइन्द्रायैव विमृधे गृह्णीयात्। सर्वा वै तेषां मृधो हता भवन्ति

टिप्पणी—सर्वं जितं ये संवत्सरमासते तस्मात् विमृधे "न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । योऽस्मां अभिदासत्यधरं गमयातमः । उपयमगृहीतोऽसीन्द्राय त्वा विमृध एष ते योनिरिन्द्राय त्वा विमृध' इति ॥ ४ ॥ यद्युऽऐन्द्रीं वैश्वकर्मणीं विद्यात् । तयैव गृह्णीयात् विश्वकर्मन् हविषा वर्द्धनेन त्रातारमिन्द्रमकृणोरवध्यम् । तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् । उपयाम गृहीतोऽसीन्द्राय त्वा विश्वकर्मणऽएष ते योनिरिन्द्राय त्वा विश्वकर्मण इति ॥ ६ ॥

एष वै ग्रहः । य एष तपति येनेमाः सर्वाः प्रजा गृहीतास्तस्मादाहु ग्रहान् गृह्णीमऽइति चरन्ति ग्रहगृहीताः सन्त इति ॥ १ ॥ (श.त.ब्रा -४५-७-१)

—अनेन मन्त्रेण सूर्य एव इन्द्रः । सः पूर्वदिक्पतिश्च इति ज्ञायते । तन्त्रवार्तिककृतः कुमारिलभट्टाचार्यस्य अभिप्रायेऽपि अत्र उत्तमार्थ एवस्वीकृतः । सर्वमभिप्रायमाकलय्य 'अहल्यायै जार' इति वेदगाथायाः अयमभिप्रायः आविष्कृतः ।—'प्रतिदिनं सूर्यः प्राच्यां दिशि उदेति । सहस्रकिरणान् सर्वत्र प्रसार्य तमो नाशयति । रात्रिमपसारयति । अत्र सूर्यरात्र्योः दैनिकव्यवहारस्सूचितः । निरुक्तानुसारात् गौः चन्द्रमाः अपि भवति । उत्तमाः गावः रश्मयः यस्य सः गोतमः इति व्युत्पत्तिमनुसृत्य गोतमः चन्द्रः इत्यर्थो भवति । चन्द्रस्य पत्नी रात्रिः । तस्याः अहल्या इति नाम । 'अहः लीयते यस्यां सा अहल्या इति व्युत्पत्तिः । दिवसः यत्र लीयते सा अहल्या रात्रिरिति निर्वचनम् । एवमेव स्वकीयतेजोभिः सहस्रकिरणैः परमैश्वर्यादिभिश्च युक्तः सूर्यः इन्द्रशब्देनाऽपि व्यवह्रियते । अतः इन्द्रसूर्ययोरभेदस्सञ्जातः । "आदित्योऽत्र जारः उच्यते रात्रेर्जरयिता" (निरु—३-३-४) इति निरुक्तानुसारात् 'अहल्यायै जारः" इत्यत्र रात्रिनाशकः सूर्यः इति चार्थो भवति । सूर्योदयादेव रात्रिः जीर्णा सती

टिप्पणी—पश्यति खलु। अतः चन्द्रस्य पत्नी रात्रिः सूर्यस्य उदयनात् जीर्णा भूत्वा नश्यति। अतः रात्रिपरिसमापकः आदित्यः इति फलितो भवति। अहल्या रात्रिः। सा च अज्ञानरूपिणी। तां ज्ञानरूपकिरणैः सूर्यः नाशयतीति कृत्वा-अज्ञाननाशकः चैतन्यदायकश्चेत्यर्थोऽपि स्वीकृतो भवति। एवञ्च 'अहल्यायै जारः'—सूर्यः, इन्द्रश्च। स च दोषनाशकः, ऐश्वर्यप्रदायकश्च इत्युदात्ततमोऽर्थः वेदादिषु अस्य मन्त्रस्य सूचितः इति ज्ञायते।

v) देवीभागवते, ब्रह्मवैवर्तपुराणे, वाल्मीकिरामायणे च गौतमाहल्य-योर्वृत्तान्तः वर्णितः।

i) देवीभागवते-प्रथमस्कन्दे-पञ्चमोध्याये-षट्चत्वारिंशत्तमे श्लोके (१-५-४६) एवं सूचितः—

'सहस्रभगसंप्राप्तिः दुःखं चैव शचीपतेः।
स्वर्गभ्रंशः तथावासः कमले मानसे सरे॥ इति

इन्द्रस्य सहस्रभगप्राप्तिः, स्वर्गभ्रंशनं, कमले मानसे सरे वासश्च अभवत् पुरा इति कथा सूचिता।

ii) ब्रह्मवैवर्तपुराणस्य - कृष्णजन्मखण्डस्य - नारदनारायणसंवादे अहल्याकथा इत्थमस्ति—"एकदा देवेन्द्रः पुष्करक्षेत्रं गतवान्। सूर्य-ग्रहणकाले तत्र स्नातुम् अहल्या आगता। सा च अतीव सुन्दरी आसीत्। स्नानसन्दर्भे तां दृष्ट्वा इन्द्रः कामपीडितो बभूव। ततः तां रत्यर्थं प्रार्थयामास। साध्वी सा तं धिक्कृत्य-बहुधा उपदिश्य, गृहं गत्वा पतिं गौतमं सर्वं निवेदयामास। सः इन्द्रं निन्दितवान्। एकदा गौतमः पूजार्थं शङ्करालयं गतवानासीत्। तदा रन्ध्रान्वेषी महेन्द्रः गौतमवेषेणागत्य तामहल्यामुपभुक्तवान्। अज्ञानात् सापि महेन्द्रमिति तं नावगता।

टिप्पणी—दिव्यचक्षुषा विषयं ज्ञात्वा गौतमः स्वगृहं सत्वरमाजगाम। तदा गृहस्य बहिः गच्छन्तमिन्द्रं दृष्ट्वा कुपितस्सन्—'त्वं भगाङ्गश्च भवेति शशाप। पुनश्च नग्नां सुताञ्चाहल्यां—'त्वं महावने शिलारूपा भवेति च शशाप। अहल्या तदा निर्दोषाहमिति प्रार्थितवती। शान्तश्च मुनिः—रामपादाङ्गुलि-स्पर्शात् सद्यः पूता भविष्यसि। तत्पुण्यात् मां प्राप्स्यसि चेति विशापं दत्तवान्। तच्छापकारणात् इन्द्रः सहस्रयोनिस्सञ्जातः। अहल्या शिलारूपा जाता। कालान्तरे इन्द्रः विष्णोरनुग्रहेण लक्ष्मीं प्राप्तवान्। अहल्या रामपादस्पर्शात् पूताऽभवत् गौतमसान्निध्यमप्यभजदिति॥ उद्धरणार्थं ब्रह्मवैवर्तपुराणस्य केचन श्लोकाश्चात्र उक्ताः। तद्यथा—

"परस्त्रीसेवनं शक्र इहैवेत्ययशस्करम्।
परत्र नरकं घोरं कामुकाय ददाति च॥

इत्युक्त्वा च महासाध्वी तं विहाय च कामुकम्।
प्रययौ स्वगृहं तूर्णं गृहिणी गौतमस्य च॥

तत्सर्वं कथयामास गौतमाय तपस्विने।
तस्थौ प्रहस्य स मुनिर्महेन्द्रं च विनिन्द्य च॥

एकदा गौतमः शीघ्रं जगाम शङ्करालयम्।
शक्रो गौतमरूपेण तां संभोगं चकार सः॥

सर्वं ज्ञात्वा च सर्वज्ञः मन्दिरद्वारमाययौ।
निर्गच्छन्तं महेन्द्रं च ददर्श मुनिपुङ्गवः॥

नग्नामहल्यां रहसि पीनश्रोणिपयोधराम्।
मुनिः शशाप शक्रं च भगाङ्गश्च भवेति च॥

कोपाच्छशाप पत्नीं च रुदतीं भयविह्वलाम्।
त्वं च पाषाणरूपा च महारण्ये भवेति च॥

ययौ च स्वगृहं शक्रः लज्जैकतानमानसः ।
उवाच मधुरं भीता स्वामिनं शोककर्शिता ॥

अहल्योवाच

मां च दासीं च निर्दोषां कथं त्यजसि धार्मिक ।
त्वं च वेदविदां श्रेष्ठो विचारं कुरु धर्मतः ॥

गौतम उवाच

त्वां जानामि मनः शुद्धां सुव्रतां च पतिव्रताम् ।
त्यक्ष्यामि च तथापि त्वां परवीर्यं च बिभ्रतीम् ॥

(ब्रह्मवैवर्तपुराणम्-कृष्णजन्मखण्डः-६१ अध्यायः—४१-५० श्लोकाः)

त्वं शक्रं स्वामिनं मत्वा सुखं भुक्त्वा रतिं गृहे ।
पश्चाद्बभूव ते ज्ञानं मां दृष्ट्वा च निशामय ॥

गच्छ गच्छ महारण्यं भव पाषाणरूपिणी ।
रामपादाङ्गुलिस्पर्शात् सद्यःपूता भविष्यसि ॥

मां संप्राप्स्यसि तत्पुण्यात् पुनरेवागमिष्यसि ।
गच्छ कान्ते महारण्यमित्युक्त्वा तपसे ययौ ॥

इत्येवं कथितं सर्वं महेन्द्रदर्पभञ्जनम् ।
पुनःसंप्राप्य लक्ष्मीं च विमोक्ष्य कृपया मुने ॥

(ब्र॰ वै॰ पु॰ — कृष्ण ज॰ ख॰ — ६१ अ ५४-५७)

अत्र पुराणे अहल्या साध्वी। कामुकमिन्द्रम् उपदिशति। पतिमपि विनयं विज्ञापयति—इति सा निर्दोषा इत्येव चित्रिता। वस्तुतस्तु इन्द्र एव दोषी। अहल्यासङ्गमनार्थमेव कुत्सितं कार्यं चकार इति च चित्रितः। गौतमः निर्दुष्टामप्यहल्यां चित्तशुद्ध्यर्थं देहशुद्ध्यर्थं च शशापेत्यपि ज्ञेयम्।

टिप्पणी—iii) वाल्मीकिरामायणे बालकाण्डे ४८ सर्गे अहल्याकथा मुनिबद्धा दृश्यते। विश्वामित्रः रामलक्ष्मणौ प्रति गौतमाश्रमं निदिश्य अहल्यावृत्तान्तं कथयति—

'इदं गौतमस्य आश्रमपदम्। पुरा अत्र गौतमो नाम महर्षिः अहल्यया पत्न्या सह वसति स्म। एकदा सहस्राक्षः शचीपतिः गौतमरहिता-मेकाकिनीमहल्यां दृष्ट्वा मुनिवेषधरो भूत्वा तामब्रवीत् —अर्थिनः सुसमाहिते ऋतुकालं न प्रतीक्षन्ते। अतः सुन्दरि! त्वया सह सङ्गममिच्छामीति। साऽपि अयम् इन्द्रः मुनिवेषधारी च इति ज्ञात्वाऽपि देवराजकुतूहलात् सङ्गमे मतिं चकार। ततः सा इन्द्रं प्रति सुरपते! कृतार्थाहम्। त्वं शीघ्रमितो गच्छ। गौतमात् आत्मानं च मां च रक्षेति कथयामास। तदा प्रीतः इन्द्रः उटजान्निर्जगाम। पुरस्तात् आगच्छन्तं तपस्विनं गौतमं दृष्ट्वा त्रस्तः विषण्णवदनस्सञ्जातः। सोऽपि मुनिः स्वकीयवेषधारिणं दुर्वृत्तमिन्द्रं ज्ञात्वा—दुर्मते इदमकार्यं त्वं कृतवानसि। अतः विफलस्त्वं भविष्यसीति शशाप। तदा सद्य एव सहस्राक्षस्य वृषणौ भूमौ पेततुः। पुनश्च गौतमः भार्यामहल्यां—

'इह वर्षसहस्राणि बहूनि निवसिष्यसि।
वातभक्षा निराहारा तप्यन्ती भस्मशायिनी।
अदृश्या सर्वभूतानामाश्रमेऽस्मिन् निवत्स्यसि॥

यदा त्वेतद्वनं घोरं रामो दशरथात्मजः।
आगमिष्यति दुर्धर्षः तदा पूता भविष्यसि॥

तस्यातिथ्येन दुर्वृत्ते लोभमोहविवर्जिता।
मत्सकाशं मुदा युक्ता स्वं वपुर्धारयिष्यसि।

इति शप्त्वा आश्रममुत्सृज्य हिमालयशिखरे तपस्तेपे॥

टिप्पणीं—इन्द्रः अग्निपुरोगमान् देवान् प्रति—

"मया गौतमतपोभङ्गद्वारा सुरकार्यमेव कृतम्। अथापि मम ईदृशी गतिः सम्पन्नेति उवाच। ततः सः अग्नेरनुग्रहेण मेषवृषणस्सञ्जातः इति कथयति। तदनन्तरं रामः—

'तदागच्छ महातेज आश्रमं पुण्यकर्मणः।
तारयैनां महाभागामहल्यां देवरूपिणीम्'॥

(वा· रा. बा· का· ४९ स १२)

इति गुरुवचनात् आश्रमं प्रविशति। तदा अदृश्या अहल्या पूर्वं रूपं समास्थाय प्रत्यक्षं गता। पुरतः स्थितां तपस्विनीमहल्यां दृष्ट्वा रामलक्ष्मणौ तस्याः पादौ जगृहतुः। गौतमोऽप्यागच्छति। रामं संपूज्य तौ कृतकृत्यो भवतः। इति कथा वर्णिता॥

अत्र अहल्यापि इन्द्रसमागमं मनःपूर्वकमेव स्वीकरोति। अतः उभावपि शापाद्दग्धौ, ततः पुनीतौ च बभूवतुः। अत्र रामायणे अहल्या-मदृश्या भवेति गौतमः शशाप। वृषणहीनश्च भवेति इन्द्रं प्रति शपितवान्। परं तु सामान्यतः सर्वत्र पुस्तकेषु—अहल्या गौतमशापेन शिलारूपा जाता। रामपादस्पर्शात् पूर्वं रूपं प्राप्तवतीति वाल्मीकिरामायणे उक्तमिति लिखित-मस्ति। Vettam mani कृते 'PURĀNIC ENCYCLO-PAEDIA' पुस्तके, शब्दकल्पद्रुमे च अहल्या शिला बभूव। राम-पादस्पर्शात् पूर्वरूपं प्राप्ता चेति वाल्मीकिरामायणकथेति लिखितमस्ति। तन्न समीचीनम्। 'सा शिला बभूवेत्यादिकथा ब्रह्मवैवर्तपुराणे वर्तते। न पुनर्वाल्मीकिरामायणे इति ज्ञेयम्। तदर्थमेवात्र मूलश्लोकाश्च वाल्मीकि-रामायणस्थाः दत्ताः। अत्र रामपादस्पर्शविचार एव नास्ति। यदा रामः आश्रमं प्रविशति, तदा पुरतः अदृश्या अहल्या दृग्गोचरी भवति। तदा रामलक्ष्मणौ तस्याः समीपं गत्वा पादौ ववन्दतुः इति वर्तते।

टिप्पणी—एवं स्थिते शिलामय्याः अहल्यायाः रामपादस्पर्शः कथं भवति। अतः सत्यसङ्गतिः ज्ञेया इति ममाभिप्रायः।

iv) अहल्यायाः इन्द्रस्य च वृत्तान्तः वाल्मीकीये रामायणे उत्तरकाण्डे त्रिंशत्तमे सर्गेऽपि संसूचितः। एकदा रावणः इन्द्रपुरोगमैः देवैः युयोध। तदा रावणिः मेघनादः इन्द्रं बबन्ध। सुराः देवेन्द्रं मोचयितुं पितामहं प्रार्थितवन्तः। स ब्रह्मा रावणसमीपं गत्वा रावणं रावणिं च प्रशस्य, इन्द्रं मोचय इत्यवदत्। तदा मेघनादः स्वकीयं किञ्चन वरं चतुर्मुखेण संप्राप्य इन्द्रं मुमोच। मुक्तश्चेन्द्रः भ्रष्टामरद्युतिः चिन्तापरीतात्मा ध्यानतत्परतां गतः। तथाभूतमिन्द्रं दृष्ट्वा देवः पितामहः प्राह—

"शतक्रतो किमु पुरा करोति स्म सुदुष्कृतम्।
अमरेन्द्र मया बुद्ध्या प्रजाः सृष्टास्तथा प्रभो।
एकवर्णाः समा भाषा एकरूपाश्च च सर्वशः॥
तासां नास्ति विशेषो हि दर्शने लक्षणेऽपि वा।
ततोऽहमेकाग्रमनास्ताः प्रजाः समचिन्तयम्।
सोऽहं तासां विशेषार्थं स्त्रियमेकां विनिर्ममे।
यद्यत्प्रजानां प्रत्यङ्गं विशिष्टं तत्तदुद्धृतम्॥
ततो मया रूपगुणैः अहल्या स्त्री विनिर्मिता।
हलं नामेह वैरूप्यं हल्यं तत्प्रभवं भवेत्॥
यस्या न विद्यते हल्यं तेनाहल्येति च विश्रुता।
अहल्येत्येव च मया तस्या नाम प्रवर्तितम्॥
निर्मितायां च देवेन्द्रः तस्यां नार्यां सुरर्षभ।
भविष्यतीति कस्यैषा मम चिन्ता ततोऽभवत्॥

टिप्पणी-त्वं तु शक्र तदा नारीं जानीषे मनसा प्रभो ।
स्थानाधिकतया पत्नी ममैषेति पुरन्दर ॥
सा मया न्यासभूता तु गौतमस्य महात्मनः ।
न्यस्ता बहूनि वर्षाणि तेन निर्यातिता च ह ॥
ततस्तस्य परिज्ञाय महास्थैर्यं महामुनेः ।
ज्ञात्वा तपसि सिद्धिं च पत्न्यर्थं स्पर्शिता तदा ॥
स तया सह धर्मात्मा रमते स्म महामुनिः ।
आसन्निराशा देवास्तु गौतमे दत्तया तया ॥
त्वं क्रुद्धस्त्विह कामात्मा गत्वा तस्याश्रमं मुनेः ।
दृष्टवांश्च तदा तां स्त्रीं दीप्तामग्निशिखामिव ।
सा त्वया धर्षिता शक्र कामार्तेन समन्युना ॥
दृष्टस्त्वं स तदा तेन आश्रमे परमर्षिणा ।
ततः क्रुद्धेन तेनासि शप्तः परमतेजसा ॥
गतोऽसि येन देवेन्द्र दशाभागविपर्ययम् ॥
यस्मान्मे धर्षिता पत्नी त्वया वासव निर्भयात् ॥
तस्मात् त्वं समरे शक्र शत्रुहस्तं गमिष्यसि ।
अयं तु भावो दुर्बुद्धे यस्त्वयेह प्रवर्तितः ॥
मानुषेष्वपि लोकेषु भविष्यति न संशयः ।
तत्रार्धं तस्य यः कर्ता त्वय्यर्धं निपतिष्यति ॥
न च ते स्थावरं स्थानं भविष्यति न संशयः ।
यश्च यश्च सुरेन्द्रः स्यात् ध्रुवः स न भविष्यति ॥
एष शापो मया मुक्त इत्यसौ त्वां तदाब्रवीत् ।
तां तु भार्यां सुनिर्भर्त्स्य सोऽब्रवीत् सुमहातपाः ॥

टिप्पणी-दुर्विनीते विनिध्वंस ममाश्रमसमीपतः ।
रूपयौवनसंपन्ना यस्मात् त्वमनवस्थिता ॥

तस्माद्रूपवती लोके न त्वमेका भविष्यसि ।
रूपं च ते प्रजास्सर्वा गमिष्यति न संशयः ॥

यत्तदेकं समाश्रित्य विभ्रमोऽयमुपस्थितः ।
तदाप्रभृति भूयिष्ठं प्रजा रूपसमन्विता ।
सा तं प्रसादयामास महर्षिं गौतमं तदा ॥

अज्ञानाद्धर्षिता विप्र त्वद्रूपेण दिवौकसा ।
न कामकाराद्विप्रर्षे प्रसादं कर्तुमर्हसि ॥

अहल्यया त्वेवमुक्तः प्रत्युवाच स गौतमः ।
उत्पत्स्यति महातेजा इक्ष्वाकूणां महारथः ॥

रामो नाम श्रुतो लोके वनं चाप्युपयास्यति ।
ब्राह्मणार्थे महाबाहुर्विष्णुर्मानुषविग्रहः ॥
तं द्रक्ष्यसि यदा भद्रे ततः पूता भविष्यसि ॥

स हि पावयितुं शक्तस्त्वया यद्दुष्कृतं कृतम् ।
तस्यातिथ्यं च कृत्वा वै मत्समीपं गमिष्यसि ॥

वत्स्यसि त्वं मया सार्धं तदा हि वरवर्णिनी ।
एवमुक्त्वा स विप्रर्षिराजगाम स्वमाश्रमम् ॥

तपश्चचार सुमहत्सा पत्नी ब्रह्मवादिनः ।
शापोत्सर्गाद्धि तस्येदं मुनेस्सर्वमुपस्थितम् ॥

तत्स्मर त्वं महाबाहो दुष्कृतं यत्त्वया कृतम् ।
तेन त्वं ग्रहणं शत्रोर्यातो नान्येन वासव ॥

टिप्पणी-शीघ्रं वै यज यज्ञं त्वं वैष्णवं सुसमाहितः ।
पावितस्तेत यज्ञेन यास्यसे त्रिदिवं ततः ॥

पुत्रश्च तव देवेन्द्र न विनष्टो महारणे ।
नीतः संनिहितश्चैव आर्यकेण महोदधौ ॥

(वाल्मीकिरामायणम्–उत्तरकाण्डम्—३० सर्गः–१८–४८ श्लोकाः)

एतत् पितामहवचः श्रुत्वा देवेन्द्रः वैष्णवं यज्ञमिष्ट्वा पुनः त्रिदिवमाक्रामत् अन्वशासच्च देवराट् इति च कथा निबद्धा ॥

अत्रापिं अहल्या शिलाभूता, रामपादस्पर्शात् पूर्वरूपा बभूव इति च कथा नास्ति । एवं च वाल्मीकिरामायणे—अहल्या शिलाभूता, रामपादस्पर्शात् प्राक्तनरूपं लब्धवतीति कथा नास्तीत्यवगन्तव्यम् ॥

v) इन्द्रः अहल्यासङ्गमनार्थं मनश्चकार । परं तु गौतमः यदा आश्रमे वर्तते तदा एतन्न सिध्यतीति कृत्वा उपायमेकं चकार । एकस्मिन् दिने इन्द्रः गौतमाश्रमसमीपमागत्य कुक्कुटवत् रवमकरोत् । सामान्यतः कुक्कुटः उषःकाले रौति तेन रवेण जनाः अरुणोदयः समभवदिति मत्वा उत्थाय प्रातःकालीनकार्येषु मग्नाः भवन्ति । अतः गौतमो मुनिः कुक्कुटरवं श्रुत्वा अरुणोदयस्समभवदिति ज्ञात्वा स्नानार्थं नदीं गतः। रन्ध्रान्वेषी महेन्द्रः सद्यः गौतमवेषं धृत्वा उटजं प्रविष्टवान् । अहल्यापि अयं महेन्द्र इति न ज्ञातवती । तयोस्समागमोऽभवत् । अन्ते गौतमः उटजमाजगाम । महेन्द्रं दृष्ट्वा त्वं विफलो भवेति, अहल्यामदृश्या भव, रामागमनात् त्वं पूर्वरूपं प्राप्स्यसीति च शशाप । ततः ब्रह्मणः अनुग्रहात् इन्द्रः सफलस्सञ्जातः । रामागमनात् अहल्या पूर्वरूपं लब्ध्वा गौतमसान्निध्यं लब्धवती । एवं इन्द्रः गौतमम् अन्यत्र गमयितुं कुक्कुटरवं चकार इति च कथा श्रूयते । अस्याः कथायाः मूलं मृग्यम् ।

(इति साञ्जलिः वैलक्ष्यं नाटयति)

चित्ररथः—(स्वगतम्) कथमस्य गर्हितां वृत्तिं जानतोऽपि तदेकायत्तचित्तता न खेदयत्यात्मानम् । तथाप्याश्वासयामि प्रकृतानुरोधेन ।

(प्रकाशम्) देव ! को वा अत्र अपकर्षः चिन्त्यते । सर्वेऽपि मदन-परवशतामुपगता एव । तथा हि—

[1]सृष्ट्वा सुतामखिललोकललामभूतां
स्रष्टाप्यकामयत तां मृगवेषधारी ।
आस्तामिदं हरिमुपात्तवधूशरीरं
दृष्ट्वा [2]हरः कमभजन्न मनोविकारम् ॥ २ ॥

---

टिप्पणी—प्रकृतमनुसरामः–'श्रुतिरिममहल्यायै जारम्' इति पद्ये इन्द्रः सर्वस्यापि मन्मथ एव कारणम् इति वदति । उर्वश्यामुत्कण्ठितः इन्द्रः तां लब्धुम् अधुना राजवेषं धृतवान् खलु । तस्य हेतुरेव मन्मथः इति स्वकीयं दोषमन्यत्र कथयति महेन्द्रः ॥ अत्यष्टिछन्दसि–हरिणीवृत्तम्–रसयुगहयैर्न्सौम्रौस्लौ गो यदा हरिणी तदा" इति लक्षणम् (वृत्त २-३ अ)

सृष्ट्वा सुतामिति । चित्ररथः महेन्द्रं प्रति कथनसमये महेन्द्रः उर्वश्यामनुरक्तः इति तु न चित्रम् इति वदति । यतः सर्वे जनाः मदनपर-वशतामुपगता एव । मदनपीडारहिताः जना एव न सन्ति । न केवलं जनाः । अपि तु देवादयोऽपि कामपीडिताः बभूवुः इति चेत् 'बलवानिन्द्रि-यग्रामः विद्वांसमपकर्षति' इति कथनं सत्यमेवेति प्रतिभातीति कृत्वा तत्समर्थयति-स्रष्टा इति ।

---

1 स्पृष्ट्वा–ग 2 'हरः' इति पदं 'ग' प्रतौ लुप्तम् ।

टिप्पणी–i) पुरा चतुर्मुखब्रह्मा सृष्टिं चिकीर्षुः काञ्चन अपूर्वां कन्यां ससर्ज । सा त्रिजगत्सुन्दरी आसीत् । अनेन निर्मिता सा अस्य सुता खलु । अथापि सः सर्वलोकललामभूतां तां सृष्ट्वा, तस्याः अनिर्वचनीयं सौन्दर्यं दृष्ट्वा तस्यामनुरक्तस्सन् मृगवेषधारी भूत्वा अकामयत इति पौराणिकी कथा ॥

शिवमहापुराणे रुद्रसंहितायां सतीखण्डे प्रथमोऽध्याये नारदं प्रति ब्रह्मा शिवकथावर्णनसन्दर्भे स्वकीयां मोहवृत्तिं कथयति । तथाहि—

' ब्रह्मोवाच—

शृणु तात मुनिश्रेष्ठ कथयामि कथां शुभाम् ।
यां श्रुत्वा सफलं जन्म भविष्यति न संशयः ॥ ९ ॥

पुराहं स्वसुतां दृष्ट्वा सन्ध्याह्वां तनयैः सह ।
अभवं विकृतस्तात कामबाणप्रपीडितः इति ॥ १० ॥

ii) एवमेव मोहिनीरूपधारिणं हरिं दृष्ट्वा हरोऽपि कामबाणपीडितस्सन् तया मोहिन्या सुखितवान् इत्यपि पौराणिकीकथा वर्तते ॥ शिवमहापुराणे शतरुद्रसंहितायां विंशतितमेऽध्याये–एवमस्ति कथा–'शिवः मोहिनी रूपिणं हरिं दृष्ट्वा मोहितः । तदा वीर्यस्खलनमभूत् । तत् अञ्जनादेवी धृतवती । अन्ते हनुमान् जनितः अतः तस्य रुद्रवीर्यसमुद्भवः इति नामाभूदिति ॥ शिवपुराणश्लोकाः–

एकस्मिन् समये शम्भुरद्भुतोऽतिकरः प्रभुः ।
ददर्श मोहिनीरूपं विष्णोस्स हि वसद्गुणः ॥

चक्रे स्वं क्षुभितं शम्भुः कामबाणहतो यथा ।
स्वं वीर्यं पातयामास रामकार्यार्थमीश्वरः ॥

तद्वीर्यं स्थापयामासुः पत्रे सप्तर्षयश्च ते ।
प्रेरिता मनसा तेन रामकार्यार्थमादरात् ॥

किञ्च—i) कथमियं वनिता तव दुर्लभा
विबुधवल्लभता भवतो यतः ।
मनुजवेषभृतिः पुनरुर्वशी-
हृदयरञ्जनसाधनता द्दता ॥ ३ ॥

महेन्द्रः—यथा रोचते प्रियसुहृदे ।

चित्ररथः—(पुरोभूत्वा) इत इतः । इदमेव निकुञ्जगृहं तव मनः-प्रियायाः ।

ii) मन्दाकिनी सदरविन्दमरन्दचोर-
मन्दानिलप्रहितसौरभसंप्रसारे ।
यस्मिन्निकुञ्जभवने भुवनैकमान्या
विद्येव सा विबुधचित्तगता विभाति ॥ ४ ॥

---

टिप्पणी—तैर्गौतमसुतायां तद्वीर्यं शम्भोर्महर्षिभिः ।
कर्णद्वारा तथाञ्जन्यां रामकार्यार्थमाहितम् ॥
ततश्च समये तस्माद्धनूमानिति नामभाक् ।
शम्भुर्जज्ञे कपितनुर्महाबलपराक्रमः ॥ इति
(शिवपुराणम्–शतरुद्रसंहिता—२० अध्यायः-३-७-श्लोकाः)

i) त्वं देवाधिपः । देवताधिपत्यं तवास्ति । अतः वनितेयमुर्वशी तव दुर्लभैव न । अथापि इदं मनुजवेषधारणं तत्प्राप्त्यर्थं न । परं तु तस्याः मनोरञ्जनार्थमेव ॥ जगतीछन्दसि–द्रुतविलम्बितवृत्तम् ॥ 'द्रुतविलम्बितमाह नभौ भरौ' इति तल्लक्षणम् (वृत्त. २–३ अ)

ii) निकुञ्जभवने स्थितायाः उर्वश्याः वर्णनमिदम् । तत्र भवने उर्वशी अस्ति । गङ्गानद्यां स्थितानां कमलानां मकरन्दमपहृत्य मन्दवायुः

महेन्द्रः—अपि नाम अस्मिन्निकुञ्जे ।

i) अङ्गैरनङ्गपरितापहृतिप्रसङ्गैः आलिङ्ग्य मामसमरागभृतान्तरङ्गा ।
अङ्गीकरोति मदनागमसम्प्रदायभङ्गीतरङ्गितविलासभृता
लताङ्गी ॥ ५ ॥

चित्ररथः—किमेतदपि चिन्तनीयं भवतः ।

ii) योषामणिर्ध्रुव[1]मुपेष्यति वश्यभावं वे[2]षान्तरग्रहणभाजि भवत्यतीव ।
जानाति नो किमु भवानपि मौनिवेषादानङ्गमङ्गळ[3]कलासुहिता-
महल्याम् ॥ ६ ॥

---

टिप्पणी-प्रवहति। तेत वायुना आनीतसौरभेण भवने सर्वत्र परिमळः प्रसरितः। तादृशपरिमळयुतभवने, त्रिभुवनैकमणिः स। उर्वशी विद्वन्मानसगता विद्येव, सुरमनोल्लासिनी सती विराजते इति ॥ उपमालङ्कारः । विद्या-उपमानम् । उर्वशी— उपमेयम् । इवशब्दः वाचकः । विबुधचित्तगतत्वं साधारणो धर्मः। अत्र श्लेषः । विबुधाः—विद्वांसः देवाश्च । विद्यापक्षे विबुधाः विद्वांसः इति देवपक्षे-विबुधाः सुराः इत्यर्थः ॥ अत्र पद्ये-मरन्दशब्दस्य मकरन्दः इत्यर्थः ॥ शक्करीछन्दसि-वसन्ततिलकावृत्तम् । 'उक्ता वसन्ततिलका तभजाजगौ गः' इति लक्षणम् । (वृत्त-र ३ अ)

i) मदनशास्त्रसम्प्रदायभङ्गीतरङ्गितविलासधारिणी, असीमानुराग-युक्तचित्ता लतेव कृशाङ्गी सा उर्वशी मन्मथतापापहारसमर्थकावयवैः माम् आलिङ्ग्य, प्रियकरमित्यङ्गीकरोति वेति महेन्द्रस्य तर्कः ॥ वसन्ततिलकावृत्तम् ।

ii) योषामधिरिति । हे महेन्द्र ! वेषान्तरग्रहणे त्वं निपुणः खलु । अत एव मुनिवेषधारिणं त्वामहल्या सुखार्थमङ्गीचकार । अधुनापि त्वं

---

[1] 'उपैष्यति' इत्यपपाठः 'क' प्रतौ ।
[2] तेषां करग्रहणभाजि—इत्यपपाठः 'ग' प्रतौ [3] कळासु—ग

महेन्द्रः—जानाम्येव । तथापि सन्दिहानं मनो न विश्रान्ति[1]मायाति ।

चित्ररथः—कस्स[2]न्देहोऽत्रापि ?

i) सा सर्वलोकवनिताजनमौळिरत्नं
नाथस्त्वमप्यखिलदिक्परिपालकानाम् ।
जानाति नो किमु विधिः बत रत्नहारी
राजेति सुप्रकटितामपि वादरीतिम् ॥ ७ ॥

महेन्द्रः—(सातङ्कम् ) कथम् अनयो[ii]पश्रुत्या राजैव कन्यारत्नमपहरिष्यतीति गम्यते । (इति चिन्तां नाटयति)

चित्ररथः—(स्वगतम् )

iii) तस्या मनो निरनुरागि विभात्यमुष्मिन्
तस्यान्तरङ्गमुदितोत्कलिकातरङ्गम् ।

---

टिप्पणी—राजवेषधारी ह्यसि । त्वां दृष्ट्वा नारीमणिस्सा उर्वशी अवश्यमागच्छत्येव । तव मनोज्ञा प्रिया भवत्येव । नात्र संशयः इति चित्ररथस्य उक्तिः ॥ वसन्ततिलकावृत्तम् ।

i) सा सर्वलोक इति । सा उर्वशी सकलस्त्रीरत्नम् । त्वमपि अष्टदिक्पतीनां नृपः । रत्नापहारकः राजा खलु । अतः अस्य स्त्रीरत्नस्याप्यपहर्ता त्वमेव । अमुं विषयं विधिः न जानाति वा इति चित्ररथस्य वचनम् । वसन्ततिलकावृत्तम् ॥

ii) उपश्रुत्या—अङ्गीकारवचनेनेत्यर्थः ।

iii) तस्या इति—तस्याः उर्वश्याः मनः अस्मिन् महेन्द्रविषये अनुरागशून्यम् । अस्येन्द्रस्य मनस्तु तस्याः उत्कण्ठया दोलायितम् ।

---

[1] 'अयति' इति पाठः 'ग' प्रतावस्ति । स तु 'अयते' इति भवेत् ।

[2] सन्देहोऽत्र—ग

मन्ये न कस्यचिदिदं सचिवत्वभाजो
धन्येतरत्व[1]मवलोकयितुर्ममैव ॥ ८ ॥

(प्रकाशम्) [2]किमिति [3]चिन्त्यते देवेनापि ?

महेन्द्रः—i) एकत्र नारायणमौनिभीतिः
अन्यत्र कामाभिभवैकभीतिः ।
आस्तामिदं भीतिरियं त्वपारा
जानाति [[4]चेत्] सैव शपिष्यतीति ॥ ९ ॥

(इति परिक्रम्य, दृष्टिं प्रसार्य)

कथमेषा पल्लवशयनोपविष्टा सखीद्वितीया किमपि मन्त्रयन्तीव वर्तते ।

चित्ररथः—देव ! विटपान्तरितावेव शृणुवः ।

(इति तथा तिष्ठतः)

---

टिप्पणी—एतादृश्यवस्थायाः दर्शनदौर्भाग्यं, तस्यामात्यस्य ममैव, न कस्यापीति खेदः मयानुभूयते इति चित्ररथस्य वचनम् ॥ उत्कलिका-उत्कण्ठा (उत्कण्ठोत्कलिके समे—(अमरः-नाट्यवर्गः) ॥ वसन्ततिलकावृत्तम् ।

i) एकत्रेति । महेन्द्रस्य भीतिवचनमिदम् । नारायणमुनिभयमेकत्र । अपरत्र मन्मथेन पराभवभीः । परं तु इतोऽप्यधिका भीतिरपरा अस्ति । यदि मदीयवेषान्तरग्रहणविषयं ज्ञात्वा सा उर्वशी मां शपिष्यति चेत् किं करणीयमित्येव अधिका भीतिरधुना मम इति ॥ अभिभवः-पराजयः ॥ त्रिष्टुभ्छन्दसि-उपजातिवृत्तम् ॥ ‘ अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ’ इति लक्षणम् (वृत्त-र-३ अ)

---

[1] मविलोकयितुं ममैवम्—ग  [2] किमपि चि—ग  [3] चिन्तिते—क

[4] ‘ ते स्वैव ’—इति ‘ग’ प्रतौ, ‘ ते त्सैव’ इति च ‘क’ प्रतौ पाठः दृश्यते । स च चेत्सैव इति भवेत् । अतः शोधितः पाठः उपरि दत्तः ।

(ततः प्रविशति यथोद्दिष्टमुर्वशी, सखी च)

उर्वशी—(संस्कृतमाश्रित्य)

i) स यद्यलं [1]मय्यनुरक्तचेताः
स्वप्नेऽपि वा भोगमुपैतुमीशः ।
अहं किमेतादृशधन्यताया-
मस्वप्नतापातकिनी समर्था । १० ॥

सखी—ण पेंखदि हों[2]दी सउणजादं । जं वामणेंतच[3]ळणादि ।
(न पश्यति भवती शकुनजातम् । [ii]यद्वामनेत्रचलनादि ।)

महेन्द्रः—प्रिये [4]ममापि अस्वप्नतैव न रोचते ।
(इत्यभियातुमुद्युङ्क्ते)

चित्ररथः—देव ! समये व्यक्तेन भाव्यं देवेन ।
(इति निवारयति)

महेन्द्रः—(स्वगतम्) कथमियमपि दुरुपश्रुतिः 'समये व्यक्ती[5]भविष्यतीति'
(प्रकाशम्) अये कथमद्यापि समयापेक्षा ।

---

टिप्पणी—i) स यद्यलमिति—स राजा पुरूरवाः यदि मयि अतिशयेन अनुरक्तश्चेत्, तदा सः स्वप्नेऽपि मया सह सुखमनुभवितुं शक्तः । यतः सः मनुजः । अतः स्वप्नयोगः तस्यास्ति । तादृशयोगः मम नास्ति । अहमप्सराः । मम स्वप्नयोगो नास्ति । देवाः अप्सरसश्च अस्वप्नाः खलु । अतः तेन सह स्वप्ने भोगमनुभवितुं अहमसमर्था किल । अधन्या खल्वहमिति चिन्तयति ॥

ii) स्त्रीणां वामनेत्रचलनं शुभसूचकम् ।

---

[1] मय्यनुरक्तचित्तस्वप्नेऽपि–ग [2] होदि सउण–क [3] चलनादि–क
[4] ममापि अस्वप्नत इव–क ॥ अत्र रोचते इति क्रियापदयोगात् 'मह्यमपीति भवेत्–यतः 'रुच्यर्थानां प्रीयमाणः' इत्यनुशासनात् चतुर्थी भवेत् ॥ अथापि षष्ठीप्रयोगोऽस्ति । [5] भविष्यसीति–क

i) मदन इह सकाण्डो बाधते मामकाण्डे
मदयति हृदयं मे [1]कोकिला काकलीभिः ।
मधुरपि किसलैस्त्रैर्भीषयत्येव लोलैः
मरुद्यमदयालुः किं करोतीति जाने ॥ ११ ॥

उर्वशी—हळा ! किळंतह्मि । उवणहि ओशीरचंदणसारमिणाळादिआइ ।
(हला ! क्लान्तास्मि उपनय औशीर[2]चन्दनसारमृणालादिकानि ।)

सखी—(तथेति निर्गत्य पुनः प्रविश्य) [3]संववि संजीकिदं एंव । गेण्हिजदु सहिए।
(सर्वमपि सज्जीकृतमेव । गृह्यतां सख्यै)

उर्वशी—कहं [4]एदाणं धाळणेऽवि संति अंथि । तुमं एंव अंपेहि मह अंगएसु ।
(कथमेतेषां धारणेऽपि शक्तिरस्ति । त्वमेव अर्पय ममाङ्गेषु ।)

सखी— (नाट्येन गृहीत्वा तथाकरोति ।)

---

टिप्पणी—i) सपरिवारो मदनः—अकाले मां बाधते । कोकिला श्रुतिसुखाव्यक्ताक्षरसूक्ष्मध्वनिभिः मम हृदयं उन्मादयति । मधुर्वसन्तः चञ्चलैः किसलयैः भीषयति मामधुना । करुणाहीनो वायुः किं करोत्यद्य इति न जाने ॥ (काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे इत्यमरः—नाट्यवर्गः) मालिनीवृत्तम् ।

---

[1] कोकिली काकलीभिः—क

[2] चन्दनरसादिकानि—इति 'क' प्रतावस्ति ॥ प्राकृतपाठस्तु ' चंदणसारमिणाळादिआइ '—इत्यस्ति । ' क ' प्रतौ संस्कृतपाठे ' मृणाल ' पदं लुप्तमस्ति । अत्र 'सार' शब्दस्य एकदेशान्वयेन घनसारः इति भाव्यम् । घनसारः—कर्पूरः । औशीरं—शयनासनम् । मृणालम्—बिसम् ॥ ' चन्दनरस ' इति स्वीकारे—श्रीगन्धरसः इति । औशीरचन्दनसारमृणालादीनि विरहतापशामकानीति प्रसिद्धानि ।

[3] सवं वि—क [4] एधाणं—क

महेन्द्रः अये पश्य तस्या विप्रलम्भमहिमानम् ।

i) तप्तायसीव परिशुष्यति गन्धसारो
लिप्तोऽपि गाढतरमेष वपुष्यमुष्याः ।
चित्ते पदं [1]वितनुते यदवेक्षितुर्मे
यत्नोपसंभृतकृतघ्नजनोपकारः ॥ १२ ॥

चित्ररथः—(निर्वर्ण्य) सत्यमेतत् ।

ii) धवळोऽपि गन्धसारो धत्ते कस्तूरिकाकृतिं निमिषात् ।
निहितो हृदि मदनविभोर्नीराजनतामुपैति घनसारः ॥१३॥

उर्वशी—हळा ! किंणु एदिणा विफळाआसेण । अंणं किं वि सुमरेहि साहणं विळहतावावणोदणंस ।
(हला ! किन्त्वेतेन विफलायासेन । अन्यत् किमपि स्मर साधनं विरहतापापनोदनस्य ।)

---

टिप्पणी—i) तप्तायसीवेति—अस्याः उर्वश्याः शरीरे गाढतरमेषः गन्धसारः-चन्दनः लिप्तोऽपि तप्तायसि यथा पदार्थः परिशुष्यति, तथा शुष्यति । दृश्यमिदं वीक्षितुर्मे मनसि यत्नोपसंभृतकृतघ्नजनोपकारः-प्रयत्नकृतकृतघ्नजनस्योपकारः स्थानमाक्रमते ॥ अयं भावः-कृतघ्नजनस्य कृते प्रयत्नकृतः उपकारः मोघ एव । यतः कृतघ्नजनाः कृतमुपकारं विस्मरन्ति । विशेषतः अपकारमपि पुनः कुर्वन्ति । अत्र तस्याः शरीरसन्तापदूरीकरणार्थं मलयजः तस्याः वपुषि लिप्तः । परं तु तस्याः देहः मलयजेन कृतमुपकारं विस्मृत्य, तं परिशुष्य, विनाशमेव कृतवान् । अतः एतद्दर्शनेन प्रयत्नसंभृतकृतकृतघ्नजनोपकारस्य चित्रणं मनसि सञ्जातमिति । तस्याः देहः कामतापेन निरांत संतापितः इति व्यङ्ग्यार्थः ।

ii) चित्ररथेन उर्वश्याः विरहतापवर्णनमिदम् । गन्धसारः-चन्दनः । सः धवळोऽपि अस्याः शरीरस्पर्शात् क्षणे एव कस्तूरिकाकृतिं

---

[1] व्यतनुते-ग

सखी—(सबाष्पम्) सहि तुह मअणबाहं ओळोअअंदिए मह मणो किंविण जाणादि। तु मं एंव कहंवि धेरं गेह्णिअ सुमरेहि साहणंदरं।

(सखि! तव मदनबाधामालोकयन्त्या मम मनः किमपि न जानाति। त्वमेव कथमपि धय गृहीत्वा स्मर साधनान्तरम्।)

उर्वशी—(विचिन्त्य) किंणु अंणंतं सं एंव महाळाअंस पडिक्किदं अंदरेण।

(किं न्वन्यत् तस्यैव महाराजस्य प्रतिकृतिमन्तरेण)

सखी—तं एंव आणइंसं (तामेवानेष्यामि)

(इति कतिचित्पदानि गत्वा)

(महेन्द्रं दृष्ट्वा, साश्चर्यम्)

अंह्महे सो एंव आअदो वंटदि भंटा। किं णु [1]पडिकिदिंपआसेण

(अहो! स एवागतो वर्तते [2]भर्ता। किं नु प्रतिकृतिप्रयासेन)

(इति हस्तसंज्ञया निर्दिशति)

महेन्द्रः—अये चित्ररथ! किमद्यापि विलम्बेन। यावदुपसर्पामि भवानास्तामत्रैव।

चित्ररथः—अथकिम्।

महेन्द्रः—उर्वशीमुपसर्पति।

---

टिप्पणी—कस्तूरिकावत् कृष्णवर्णत्वं भजते। घनसारः कर्पूरः। सः यदि अस्याः हृदि निहितश्चेत्, सद्य एव तापाग्निना जाज्वल्यमानस्सन् मदनराजस्य नीराजनत्वं उपैति। अर्थात् अस्याः विरहतापः अधिकतमोऽस्तीति भावः। मात्राछन्दसि गीतिवृत्तम्। आर्यावृत्तस्य पूर्वार्धलक्षणमुभयोर्दलयोर्विद्यमानत्वात्। तदुक्तं लक्षणम् 'आर्याप्रथमदळोक्तं यदि कथमपि लक्षणं भवेदुभयोः। दलयोः कृतयति शोभां तां गीतिं गीतवान् भुजङ्गेशः॥ इति (वृत्त-२-२ अ)

---

[1] पडिक्किदिपंआसेण—क

उर्वशी—(स्वगतम्) अह्महे सो एव्व एसो। जो मह मम्महोक्कळि[1]आकाळणं।

(अहो स एवैष:। यो मम *मन्मथोत्कलिकाकारणम्।)

(इति साश्चर्यमुत्तिष्ठति)

सखी—(सहर्षमुर्वशीमपवार्य सहि जाव माहवी [2]चंडादवपळिमिळाणा दाव एव्व घणाघणं वि [3]सअं पत्तोत्ति अच्चळिअमच्चळिअं।

(सखि! [1]यावन्माधवी चण्डातपपरिम्लाना तावदेव घनाघनोऽपि [3]स्वयं प्राप्त इत्याश्चर्यम् आश्चर्यम्।)

उर्वशी—(निपुणं निर्वर्ण्य—(स्वगतम्) णूणं एसो चक्कवट्टी णिअपुळगमणत्थं णेणेव्व मग्गेण आअदोत्ति पडिहादि। दिट्ठिआ खु सो एव्व अहिमुहेण [4]विहिणा विवित्तं ळमणिज्जे [5]णिउंजपदेसदो अह्मि आअदो एव्व चिट्ठदि।

(नूनं एष चक्रवर्ती निजपुरगमनार्थमनेनैव मार्गेण आगत इति प्रतिभाति। दिष्ट्या खलु स एव अभिमुखेन विधिना विविक्तरमणीये निकुञ्जप्रदेशे आगत एव तिष्ठति।)

(प्रकाशम्)

हळा! एदस्स महाळाअस्स [6]अब्भाअदस्स अदिहिसक्काळं कळेमि।

(हला! एतस्य अभ्यागतस्य अतिथिसत्कारं करोमि।)

---

टिप्पणी—*मन्मथोत्कलिकाकारणम्। उत्कलिका-उत्कण्ठा (उत्कण्ठोत्कलिके समे इत्यमरः) मन्मथस्य उत्कलिका, तस्याः कारणम् इति।

[1]यावन्माधवीति। माधवी-कुन्दपुष्पम् यावत् चण्डातपेन परिम्लाना, तावदेव घनाघनः-जलभरितमेघोऽपि आगत इति आश्चर्यकारणमिति। अत्र उर्वशी मदनतापेन परिम्लाना सती राजनि बद्धादरा

---

[1] ळिकाका—क. [2] संडादव—क [3] स्वअं—क

[4] 'ग' प्रतौ 'विहिणा' इति पदं नास्ति।

[5] निउंजपदेसे आअदो—ग [6] अंभाअतस—क

**महेन्द्रः**— किं हीयतेऽस्माकमिदानीम् अतनुपरितापभाजामभियुक्ताना च तृष्णयाधिकया । 'अभ्यर्हणमतिथीनामनुकूलजनावलोकनं' मन्ये ।

**सखी**— (अपवार्य) सहि सहिंपाअंविअ एदंस वअणं ।

(सखि ! साभिप्रायमिव एतस्य वचनम् ।)

**उर्वशी**—(जनान्तिकम्) सदुळो खु महाळाओ ।

(चतुरः खलु महाराजः)

**चित्ररथः**—(निपुणं खलु उपक्रान्तं देवेन ।)

**उर्वशी**— हळा ! उवणेहि मदाळादो [1]पळादिअं मंदाणी[2]सळिळं अ ।

(हला ! उपनय [3]मदारात् फलादिकं मन्दाकिनीसलिलं च)

**सखी**— तहेंति (तथेति, निर्गत्य पुनः प्रविश्य) अए महाळाअ अंध एंव [4]मणिपळअंमि विंसमिअ एदं फळादिअं [5]उवसविअ सळ्ळतावं वअतेदुतंथ भवं पुळगमणा एंति मह [6]सहि [7]विंणावेदि ।

(अये महाराजः ! अत्रैव मणिफलके विश्रम्य एतत्फलादिकमुपलभ्य प्रयततु भवान् पुरगमनायेति मम सखी विज्ञापयति ।)

(इति फलादिकमर्पयति )

**महेन्द्रः**—(उपविश्य) [8]किमनेन फलादिकेन । जातमेव फलमस्मदागमनस्य ।

**उर्वशी**—(स्वगतम्) मह मणोरहं[9]सेंति भणिदंवं ।

(मम मनोरथस्येति भणितव्यम् )

(प्रकाशम् ) (सलज्जं सखीं प्रति)

---

टिप्पणी–चिन्तयन्ती वर्तते यावत्, तावदेव वर्षाकालीन मेघ इव अयं राजा आगतः । अनेन अस्याः मदनतापः दूरीभवतीति तस्याः सख्याः आशयः ।

---

[1] हळादिअं–ग [2] सळिळॅं आ–क [3] मदारात् इत्यस्य मत्समीपमित्यर्थः ।
[4] मणिपळएवि–ग [5] उवसिविअ–ग [6] सही–ग [7] विंणवेदि–क
[8] किमेतेन–ग [9] हंसंति–ग

सहि किंणु हिंजदि महाळाअंस । अह्मेसु अणुंगहो एंव सवळिआ पळिंगहोंति विणवेहि ।

(सखि किं नु हीयते महाराजस्य अस्मास्वनुग्रह एव सपर्या[1]परिग्रह इति विज्ञापय ।)

चित्ररथः—सत्यमनुग्रहशीलः खल्वेतादृशेषु वस्तुषु [2]महेन्द्रः ।

(इति पश्यति)

महेन्द्रः—अये ! दीयतां भवत्याः करेणैव आतिथ्यम् । यत् 'i)' सादर एव [3]सुखयति पूजाविधिः'

सखि–सहि तुमं एंव कळेहि एदंस सवळिअं ।

(सखि ! त्वमेव [4]कुरु एतस्य सपर्याम् )

उर्वशी—माल्येन ताडयति ।

महेन्द्रः—(निर्वर्ण्य)

i) या नर्तनं कृतवती दिविषत्सभाया[5]मानङ्गमङ्गलविलासकलासमृद्धम् ।
सैवाद्य चंक्रमविधेरपि दुर्बलेति लावण्यशेषमयता वपुषानुमन्ये ॥१४॥

---

टिप्पणी—i) सादर एव सुखयति पूजाविधिः—आदरपूर्वकः अतिथिसत्कारः आनन्दयतीति भावः ।

ii) या नर्तनमिति । देवसभायां हृदयाह्लादकरं मन्मथोल्लासकरं नर्तनं कृतवती उर्वशी इयमेव वा नवेति संशयो जायते ममाधुना । यतः अधुना सैव गमनकर्मण्यप्यशक्ता, लावण्यशेषगात्रा च वर्तते इति चेत् अस्याः मदनतापः असीमेति प्रतिभातीति-इन्द्रस्य उक्तिरियम् ॥ वसन्ततिलकावृत्तम् ।

---

[1] परिग्रहीते–क [2] महेन्द्र पश्यति–ग [3] सुख इति–ग

[4] कुरु कुरु एतस्य–इति 'क' 'ग' प्रत्योरुभयत्र दृश्यते पाठः । तत्र 'कुरु' इति पदमेकमधिकमिति, त्यक्तम् । [5] मानन्दमङ्गळ–ग

अपि च—

i) विससूत्रहारवलया नळिनदळारचितनव्यताटङ्का ।
घनसारगन्धलेपा मनसानुमितैव मदनदयितेति ॥ १५ ॥

चित्ररथः—कथमनुरागोद्घाटनं कृतमेतेन । अथवा सम्प्रदायज्ञः खल्वेतादृशेषु देवः ।

उर्वशी—कहं णादावंथंह्मिणेण ।

(कथं ज्ञातावस्थास्म्यनेन)

(सखीमपवार्य) पअंतणगोविदोवि मअणो पइणेदि एवं [1]पइदिं [2]पेंखताणं ।

(प्रयत्नगोपितोऽपि मदनः प्रकटयत्येव पश्यताम् )

सखी—को णु अवकळिसो । जो वंळहो देणेंव जाणिदो मणोरहो वि ।

(को न्वपकर्षः यो वल्लभः तेनैव ज्ञातो मनोरथोऽपि ।)

महेन्द्रः—कथमेताभ्यामहं ज्ञातोऽस्मि । यदन्योन्यं मन्त्रयतः ।

(इति चिन्तां नाटयति)

चित्ररथः—कथमेष चिन्ताकुल इव प्रतिभाति । तस्मात् तर्कयाम्यनेनैव पथा यद्यागमिष्यति राजा किं कर्तव्यम् इति [3]मनसा ध्यायतीति । आः कष्टं खलु सप्रत्यूहाशंसनं नाम तरळ्यत्यात्मानम् । (इति पश्यति)

---

टिप्पणी—चंक्रमविधेः—गमनकर्मणः ।

i) विससूत्रहारवलयेति । बिससूत्रनिर्मितहारवलया, कमलदळनिर्मितताटङ्कभूषिता, कर्पूरगन्धलेपायितशरीरा, इयं साक्षाद्रतिरेव, मनसानुमितैव भावये ॥ आर्यापूर्वार्धलक्षणमुभयोर्विद्यमानत्वात् गीतिनामकं मात्रावृत्तम् ।

---

[1] पक्रिदिं पेंख—ग [2] पेंखताणं—क [3] मनसा निध्यायतीति—क

(ततः प्रविशति पुष्पकेन सह राजा मातलिश्च)

मातलिः—राजन् । अयमेव सुमेरुः । इयमेव अधित्यका च । इदमेव मन्दाकिनी[1] परिसरमन्दारवनम् ।

(इत्यङ्गुल्या निर्दिशति)

राजा—'आहो ! रमणीयता वनस्य' ।

*सौवर्णभूजनितभर्मलतावितानसंभूतरत्नमयसूनफलावलीकम् ।
मन्दारवारमधुसौरभसारभारमन्दाभिपातपवनं न वनं मुदे किम् ॥ १६ ॥

मातलिः—तदत्र विश्रम्य सर्वलोकदिदृक्षाविहारश्रममपोह्य पुरीमुपगच्छावः ।

राजा—(स्वगतम्) कथं तनुश्रममेव जानात्येषः न पुनरतनुश्रममेतस्य (विचिन्त्य)

i) अनुरूपचतुर्विधाङ्गहारैरहरन्मे मन एव सेति मन्ये ।
नयदीक्षणमप्यनुज्झदास्ते[2] स्मयमानाननपङ्कजां कथं ताम् ॥१७॥

---

टिप्पणी—* सौवर्णभूजनितेति । अस्य वनस्य सौन्दर्यं चेतोहारि वर्तते । वनभूमिरियं सुवर्णमयी । स्वर्णमयीलताळिः । तत्र विकसितानि पुष्पाणि फलानि च रत्नमयानीव विराजन्ते । मन्दार-सिन्धुवारादिपुष्प-परिमळसारभारेणेव वायुः मन्दं मन्दं वहति । रमणीयमिदं वनं खल्विति ॥ भर्म-स्वर्णम् । (तपनीयं शातकुम्भं गाङ्गेयं भर्मकर्बुरमित्यमरः (२ का-वैश्यवर्गः) वितानम्-समूहः, विस्तारश्च (क्रतुर्विस्तारयोरस्त्री वितानं त्रिषुतुच्छकम्-इत्यमरः-नानार्थवर्गः) ॥ वसन्ततिलकावृत्तम् ।

i) अनुरूपेति । सैव उर्वशी चतुर्विधाभिनययुक्ताङ्गहारैः नर्तनैः मदीयं मनः अपहृतवती । स्मितवदनां कमलमुखीं तां

---

[1] परिसरमिति—ग

[2] नुज्झदास्ते—ग

किञ्च—

*आलोकते रूपकलां तदुक्तीराकर्णयत्यास्पृशति स्तनेऽपि ।
आलिङ्गती[1] वाङ्गलतां मनो[2] यदायाति संतापमथापि चित्रम् ॥१८॥

(प्रकाशम्) तथाकुर्मः । (इत्यवतरणं नाटयतः)

राजा—अये मातले ! यावत् प्रविश्य मन्दारवनं, विश्रम्य पुनरागच्छामि । तावदत्रैव विमानराजं रक्षस्व ।

---

टिप्पणी—द्रष्टुं गता मदीया दृष्टिः तस्यामेव स्थिरा वर्तते, न पुनः प्रत्यावर्तते । सा अनुपमनर्तनचतुरा इति राजा चिन्तयति मनसि ।

अङ्गहारः नृत्यम् । 'अङ्गहारोऽङ्गविक्षेपो' इत्यमरः (नाट्यवर्गः)

अभिनयति वस्तूनि अभिव्यनक्तीति अभिनयः । स च चतुर्विधः आङ्गिकवाचिकसात्विकाहार्यभेदेन । अङ्गं हस्तादि । तद्व्यापारः पताकादिराङ्गिकाभिनयः । पाठ्यापरपर्यायं काव्यनाटकरूपं वाचिकम् । तदभिनयो रसोचितरागानुषङ्गादिः । परगतसुखदुःखभावनाभावितान्तःकरणात् सत्वात् भवाः भावाः सात्विकाः स्तम्भादयः । तदभिनयो अनिमेषनयनत्वादिः । नाट्योचितालङ्कारधारणम् आहार्याभिनयः ॥ एवं चतुर्विधाभिनययुतं नृत्यम् । तस्मिन् चतुरेयं चित्तापहारिणी । अत एव तस्यां लीना मदीया दृष्टिः तत्रैव कीलिता । न पुनः प्रत्यागता इति भावः ।

(प्रतापरुद्रीयस्य-चतुर्विधैरभिनयैः इति श्लोकस्य-रत्नापणव्याख्यानम् अनुसृत्य अभिनयविषयोऽत्र प्रदत्तः) ॥ मालभारिणीनामकमर्धसमं वृत्तम् ।

*आलोकते इति । मनसि तया सह पञ्चेन्द्रियसुखाद्यनुभवः मया अनुभूतोऽपि, मनः पुनः सन्तापमेवायते इति आश्चर्यमिदमिति सः

---

[1] तीढाङ्गलतां—ग

[2] 'यदा संयाति'—इति 'ग' प्रतिपाठः । 'यत्संयाति' इति भवेत् ।

मातलिः—तथेति (रथेन सह निष्क्रान्तः)

राजा —(कतिचित्पदानि गत्वा) (सुखस्पर्शमभिनीय)

*मन्दाकिनी यत्र्किचारविन्दमन्दारवाटी च विलासपेटी।
मन्दानिलोऽपि श्रमनोदशीलः मन्देतरं भाग्यमिदं ममैव ॥१९॥

(इति चक्षुः प्रसार्य)

कासौ भामिनी सौदामनीव नभश्च्युता सखीद्वितीया वर्तते।
(साश्चर्यम् )

i) 'तत्तादृशी प्रियैवैषा तादृशी वा न मन्महे।
(विमृश्य)
सदृशी चेति यत्तस्याः स दृशोरेव विभ्रमः ॥ २० ॥

(निर्वर्ण्य)

अये कोऽयं मदीयवेषधारी पुरुषः? भवतु आलोकयामि।

(इति विटपान्तरितस्तिष्ठति)

---

टिप्पणी—राज्ञः वचनम् ॥ त्रिष्टुभ् छन्दः—इन्द्रवज्रावृत्तम् ॥ 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति लक्षणम्।

*मन्दाकिनीति। मन्दारवनमिदमन्वर्थनामकमस्ति। एकत्र मन्दाकिनी प्रवहति। तत्र एका पुष्पवाटी वर्तते। तत्र अरविन्दमन्दारादि-कुसुमानि विकसितानि। श्रमापनोदवायुरपि मन्दं नुदति। अहो पुण्यतरं भागदेयमिदं ममैवेति आनन्दः जायते ॥ वाटी—उपवनम् ॥ इन्द्रवज्रावृत्तम्।

i) तत्तादृशीति। तटिदिव स्थितामुर्वशीं राजा दृष्ट्वा, तामुर्वशीमित्यजानन् प्रथमतः एवं चिन्तयति—इयं पुरोदृष्टा भामिनी, सैव वोर्वशी, उत अन्या काचित्—इति न जाने इति। ततः सम्यक् दृष्ट्वा-इयं

**उर्वशी**—(सखीमपवार्य ) सो एंव एसो । दाणिं समीवं ठिदे तंसिं मणो वादावहूददीवकळिआविअ [1]चंचळंतणं पंतं ।

(स एवैषः । इदानीं समीपस्थिते तस्मिन् मनो वातावधूतदीपकळिकेव चञ्चलत्वं प्राप्तम् ।)

**सखि**—महवि एंवं एंव । काळणं दु [2]ण पेंखामि ।

(ममाप्येवमेव, कारणं तु न पश्यामि ।)

**महेन्द्रः**—किन्वेतावदातिथ्यप्रदाने विलम्बः क्रियते ।

(इत्यूर्वशीं [3]हस्तेनानिनीषति)

**चित्ररथः**—अहो [4]मनसश्चापल्यं देवस्य । यन्मोहाकुलतया सखीसमक्षमेव आक्रष्टुमीष्टे ।

**उर्वशी**—सहि तुमं एंव एदंस अदिहिणो पिअं [5]सवळिअं कळेहि ।

(सखि [6]त्वमेव एतस्य अतिथेः प्रियां सपर्यां कुरु)

(इति सखीमभ्यन्तरीकरोति)

**सखी**—(विहस्य) ण खु मं पंथेदि [7]राआ । ता तुमं एंव कळेहि एंदंस मणोरहं ।

(न खलु मां प्रार्थयते राजा । तस्मात् त्वमेव कुरु एतस्य मनोरथम् ।)

(इति किञ्चिदाक्षिपति)

**राजा**—सत्यमेष कश्चन राक्षसः छद्मना अपहर्तुकामः कामिनीमुपसर्पति । किमद्यापि विलम्बेन । (इत्युपसर्पति)

---

टिप्पणी—तस्याः उर्वश्याः सदृशी भामिनीति भावये । उर्वशीचिन्तया मम सर्वदा, सर्वत्र, सर्वथा सैव दृश्यते । अतः अधुनापि इयमुर्वशीति भावना मदीये चित्ते भवति चेत्, तदा सः चित्तविभ्रम एव नान्यः इति ॥

---

1 संचळतणं–क 2 न पेंखामि–क 3 हस्तेन निनीषति–ग 4 मनश्चापल्यम्–ग
5 सपळिअं–ग 6 त्वमेवास्यातिथेः–ग 7 राअ–क

सखी—(दृष्ट्वा, साशङ्कम्) हळा [1]इदो इदो पेंख। [2]अंणोवि पुळूळवो [3]आअंछदि।

(हला, इतः इतः पश्य। अन्योऽपि पुरूरवा आगच्छति।
(इति निर्दिशति)

उर्वशी—अंह्महे किंणु एदं। (अहो किं न्वेतत्)
(इति वैलक्ष्यं [4]निरूपयति।)

चित्ररथः—(सभयम्) अहो! स एव i) अन्तरायो [5]अन्तरायातः। किं कुर्मः? भवतु। किं वा भविष्यत्यनयोः? कथं ज्ञास्यत्युर्वशीति स्फुटमग्रे भविष्यति।

(इति सातङ्कं पश्यति)

राजा—अरे! रे! [6]राक्षसापसद, मदीयवेषेण कथमेनां प्रलोभयसि? ततः तव शिर एव अपहरिष्यामि।

महेन्द्रः—अहमखिलरक्षोविक्षोभणधुरन्धरः पुरूरवा नाम। त्वं तु राक्षसोऽसि। यत्कैतवेन मामपोह्य मन्मनःप्रियामपजिहीर्षसि।

(इत्युभौ संनद्धौ तिष्ठतः)

चित्ररथः—'विधिरचनाचातुर्यं विघ्नशताकुलम्' इति प्रतीतमिदम्। ii) [7]सरघायुतमधुवत् सहसा सौलभ्यमभ्युपैति कथम्)

(इति चिन्तां नाटयति)

---

टिप्पणी—i) अन्तरायः :— विघ्नः। ii) सरघायुतमधुवत्— 'सरघा मधुमक्षिका' इत्यमरः। 'मक्षिकायुतमधु न सुलभं लभ्यते। मक्षिकाः दशंति खलु। उपायेन स्वीकार्यं तत् एवमेवाऽत्रापि।

---

[1] इदो पेंख–क [2] अंणोपि–क [3] आअंचदि–ग
[4] रूपयति–क [5] अन्तरायातः। अतं किं कुर्मः–ग
[6] राक्षसापशद–क–ग [7] सरघायुतयुतमधुवत्–क, ग

उर्वशी—अंचाहिदमंचाहिदं। का गइ। कंस वा कहणिंज। किंणु कळेमो अंह्मे।
(अत्याहितम्, अत्याहितम्। का गतिः? कस्य वा कथनीयम्? किं नु कुर्मः वयम्?)
(इति सखीमालिङ्गति)
(प्रविश्य पटाक्षेपेण तापसः)

तापसः—आदिष्टोऽस्मि भगवता नारायणेन मुनिना। यथा—गच्छ वत्सायाः [1]सदेशम्। ब्रूहि त्वं मुखेन मदीयं सन्देशम्।

'[2]पुरः पुरूरवोवेषधार्येष हि पुरन्दरः।
पुरीजिगमिषायातो द्वितीयस्तु पुरूरवाः ॥ २१ ॥ इति।

चित्ररथः—अत्याहितम्। अत्याहितम्।
उर्वशीसख्यौ— (सवैलक्ष्यमाकर्णयतः)
राजा—([3]स्वगतम्) कथमेष पुरन्दरो अस्मान् विप्रलब्धुमुपक्रान्तः।
(प्रकाशम्) (सरोषम्) अरे रे सुराधम!

*'यः कृत्वा मुनिवेषभीषणवशादस्थानसंयोजितात्
अद्यापि स्फुटमेष मेषवृषणो [4]दोषीत्यलं गर्ह्यसे।
सोऽयं संप्रति मामकेन वपुषा, [5]स्वाधीनतामुर्वशी-
मेनां नेतुमिहागतोऽसि †कुहनामभ्यस्तपूर्वामिव ॥ २२ ॥

*पुरा त्वम् अहल्यायामस्थानकामवशात् मुनिवेषधारी सन् तामनुभूय, सदोषो भूत्वा गौतमेन शप्तः, मेषवृषणो बभूविथ। स एव त्वमधुना मदीयवेषेण, पूर्वाभ्यासज्ञानकारणेनेव उर्वशीमपहृत्य नेतुमिहागतोऽसि किम्। अरे सुराधम! किमिदमकार्यमिति राजा इन्द्रं प्रति वदति।

†'कुहना—लोभान्मिथ्येर्यापथकल्पना'—इत्यमरः (ब्रह्मवर्गः)
लोभाद्या मिथ्येर्यापथकल्पना सेति भावः॥

[1] संदेशम्–ग [2] पुरः पुरूरवोवेषपूर्ण एष पुरन्दरः–क
[3] 'स्वगतम्' इति पदं 'क' प्रतौ नास्ति। [4] मोषी–ग [5] स्वाधीरताम्–क

तदेहि समरक्षमां क्षमामवतरामः ।

i) 'यदि जेष्यति यः कश्चित् आवयोः स्पर्धमानयोः ।
वशमेष्यति तस्येयं वशेव मददन्तिनोः ॥ २३ ॥

महेन्द्रः—अरे ! नराधम ! किं प्रलपसि ?

मनोरथप्रियायाः मे मनोरोधेन यत्कृतम् ।
तदेव देवताभर्तुः कलुषीकृत्य कथ्यसे ॥ २५ ॥

तदेहि समरभुवमेव ।

(इत्युभौ निष्क्रान्तौ)

चित्ररथः—ii) 'अन्यथा यदुपक्रान्तमन्यथाभूतमन्ततः ।
अनन्वितमसन्दर्भमर्भाणामिव भाषितम् ॥ २३ ॥

तदहमभिधाय देवानामेतद्वृत्तान्तं सुमेरुशिखरवासिनां सुधाशनानां सहायीकर्तुं देवस्य ।

(इति द्रुततरं निष्क्रान्तः)

---

टिप्पणी—अतिधृतिछन्दसि—शार्दूलविक्रीडितवृत्तम्' "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् " इति लक्षणम् । (वृत्त र-३ अ)

i) यदि जेष्यतीति । अन्योन्यम् उर्वशीकृते स्पर्धमानयोरावयोर्मध्ये, परस्परं युध्यमानयोः मदगजयोर्मध्ये विजेतुर्गजस्य वशा-करिणी, वशमेष्यति यथा, तथा जयशीलस्य वशमेश्यत्युर्वशीति भावः ।

ii) यदुद्दिश्यकार्यमारब्धं, तदन्यथाभूतम् । तत्रापि आभ्यां नृपमहेन्द्राभ्याम्, असम्बद्धमसन्निवेशं वचनं, बालकानाम् असम्बद्धप्रलपनमिव भाषितम् ।

**तापसः**—अहमेतद्वृत्तान्तं गुरवे निवेदयामि ।

(इति निष्क्रान्तः)

**उर्वशी**—[1]सहि एदाणं अंणोंणकळहो महकिदे होदित्ति महंतो खु जणापवादो ॥

(सखि ! एतयोरन्योन्यकलहो मम कृते भवतीति महान् खलु [2]जनापवादः)

**सखी**—हळा ! संवंवि भअवदो णाळाअणंस पिदुणो पह.वादो [3]सुहोदकं एंव हविसदि । अह्मेवि अंभुणदट्ठाणं गदुअ पेंक्खह्म किंणु पवंटदि [4]एदाणंति ।

(हला सर्वमपि भगवतो नारायणस्य पितुः प्रभावात् सुखोदर्कमेव भविष्यति आवामप्यभ्युन्नतं स्थानं गत्वा पश्याव: किं प्रवर्तत एतयोरिति ।)

(इति निष्क्रान्तास्सर्वे)

इति तृतीयोऽङ्कः

---

[1] i) सहि मह किदे एदाणं अंणोंणकळहोदित्ति–ग

ii) सहि मह किदे एदाणं अंणोंणकळहो मह किदे होदित्ति–क

[2] लोकापवादः–क [3] सुहोदकं एंव–क [4] एताणं ति–क





## अथ चतुर्थोऽङ्कः

(ततः प्रविशति गन्धर्वः)

गन्धर्वः—आदिष्टोऽस्मि [1]तत्रभवता चित्ररथेन यथा—

प्रवर्तते किल सुहृदोरप्येकवस्तूपलम्भसंभृतमनोरथयोः पुरन्दर-पुरूरवसोः अन्योन्यसङ्ग्रामः। [2]अहमप्यस्य सहायताह्वानतत्परोऽस्मि देवस्यास्माकम्। सखीद्वितीया च उर्वशी सुमेरुशिखरमधितिष्ठति। स्त्रीस्वभावतया सङ्ग्रामदर्शनेन यथा न बिभेति तथा भवता तत्पार्श्ववर्तिना समाश्वस्तव्या। (अवलोक्य) सैषा सखीसहिता किमपि चिन्तयन्तीव दृश्यते। यावदुपसर्पामि।

(इति परिक्रामति)

(ततः प्रविशति उर्वशी सखी च)

सखी—हळा! एदं एंव [3]ओळोअणं [4]समळंस कादुं उइदं ठाणं पडिहादि।

([5]हला! एतदेव अवलोकनं समरस्य कर्तुमुचितं स्थानं प्रतिभाति।)

उर्वशी—(सचिन्ताश्वासम्) जं रोअदि [6]सहीए।

(यद्रोचते सख्यै)

(इति परिक्रम्य अवलोक्य)

कहं एसो गंदवळाअंस चितरहंस पिआणु चळो कुरंडओ णाम।

(कथमेषो गन्धर्वराजस्य चित्ररथस्य प्रियानुचरः कुरण्टको नाम)

---

[1] तस्य भवता–क  [2] अहमप्यस्य तत्सहायता–ग  [3] अवळोअणं–ग

[4] समंळस–क  [5] 'हला' इति पदं 'ग' प्रतौ नास्ति।

[6] सहिए–क  [7] चरो–क

(किञ्चिदुच्चैः)

भो कुळंटक कुदो सि तुमं ।

(भोः कुरण्टक ! कुतोऽसि त्वम् ?)

कुरण्टकः—आदिष्टोऽस्मीत्यादि पुनः पठति ।

उर्वशी—अंह्महे [1]अंह्मेसु कलुणाळुंतणं गंधवळाअंस ।

(अहो ! अस्मासु करुणालुत्वं गन्धर्वराजस्य)

सखी—हळा ! संवाणं अंचराणं [2]जोअंखेमपडिपाळणाहि आळिणो तंस ण खु [3]एदं उवंकणिंजं ।

(हला ! सर्वासामप्सरसां योगक्षेमपरिपालनाधिकारिणस्तस्य न खल्वेतदुपेक्षणीयम् ।)

गन्धर्वः—(चक्षुः प्रसार्य) कथमविदूर एव सुरेश्वरनरेश्वरौ सन्नद्धतया वर्तेते । तथाह्येतौ—

i) निर्यत्क्रोध [[4]स्फुलिङ्गान्] इव नयनयुगे [5]शोणिमानं वहन्तौ
[6]निर्यत्नोत्सर्पिदर्पज्वरभरभरितारक्तवक्त्राम्बुजातौ ।
साटोपभ्रान्तशस्त्रप्रचयचकचकद्योत[7]विद्युत्प्रतानं
प्रायस्संसूचितास्त्रप्रसर[8]मिव महावर्षधाराप्रकर्षम्* ॥ १ ॥

टिप्पणी—i) क्रोधेन तयोः महेन्द्रनृपयोः नेत्रे आरक्ते स्तः । ते अग्निकणान् बहिः प्रसरत इव प्रतिभातः । पुनश्च दर्पेण तयोर्वदने शोणिते वर्तेते । आभ्यां ज्वरभरः भरित इव भासते स्म । गर्विताभ्यां ताभ्यां प्रहितशस्त्र-

1 अंह्मासु–ग 2 योअंखेम–ग 3 एतं उवंकणिंज–क

4 ' स्फुलिङ्गा इव '—इति पाठः क–ग प्रत्योः अस्ति । स च ' स्फुलिङ्गान् ' इति भवेत् इति भाति ।

5 शोणिभासो वहन्तौ–क 6 निर्यत्नोत्सर्पीति द्वितीयः पादः ' ग ' प्रतौ लुप्तः ।

7 विद्युत्तान–क 8 मिह महा–क

*अस्मिन् पद्ये ' कुरुतः ' इति क्रियापदमत्र अध्याहार्यमिति प्रतिभाति ।

**उर्वशी**—कहं दाणिं [1]णिजरूवेणेव [2]पंवदोपंचआइं महेन्दो णळेंदं [3]उंद्दिसिअ [4]संणंधो वंटइ ।

(कथमिदानीं निजरूपेणैव पर्वतोदत्यकायां महेन्द्रो नरेन्द्रमुद्दिश्य सन्नद्धो वर्तते ।)

**सखी**—फुडीकिदो खु । महेशिशिंसेण [5]वेसंदळदाळणेण किंणु [6]होदंवंति पक्किदिं एव्व आअदो ।

(स्फुटीकृतः खलु महर्षिशिष्येण वेषान्तरधारणेन किं नु भवितव्यमिति प्रकृतिमेवागतः)

(नेपथ्ये)

[7]अरे ! रे ! नरेश्वरापशद ! अयमयम्—अखिलदिक्पालनिषेवाहेवाकविषयः समदरिपु[8]मदप्रमथनधुरन्धरः पुरन्दरः ।

नन्वय—**चञ्चद्भुजभ्रमितचण्डवरायुधश्री-**
**सम्यक्प्रकल्पितघन[9]क्षणवत्सहस्रम् ।**
**उद्दामभीमशरडामरवर्षकाभ्रविभ्राजमानमभविष्यदनभ्रमभ्रम् ॥२॥**

---

टिपण्णी—निचयेन विद्युत्पुञ्जः चकचकेति द्योतते स्म । अनयोः अस्त्रप्रसरः महावर्षधाराप्रकर्ष इव आसीत् । अर्थात् कुपिताभ्यां ताभ्यां प्रहितास्त्रप्रसरः चकचकद्योतमानया विद्युता सहितस्सन् महतीं वर्षधारां करोतीव भाति स्म इति भावः ॥ प्रकृतिछन्दसि स्रग्धरावृत्तम् । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति लक्षणम् ॥ (वृत्त-र-३-अ)

**चञ्चद्भुज इति**—तयोः भीकरयुद्धमत्रवर्णितम् । पद्यमिदं वेणीसंहारनाटकस्य "चञ्चद्भुजभ्रमितचण्डगदाभिघात संञ्चूर्णितोरुयुगलस्य सुयोधनस्य" इति पद्यमनुकरोति ॥ शक्वरीछन्दसि—वसन्ततिलकावृत्तम् ॥

---

1 णिअरूवे एव्व—क
2 पंवदोपंचअंहि महेंदो—क
3 उंदिशिअ—क
4 संणधो—क
5 वेसंदळवेसंदळदाळणेण—ग
6 होदंवंति—ग
7 अरे नरेश्वरापशद—ग
8 मदमथन—ग
9 क्षणमत्सहस्रम्—क

उर्वशी—कस एदं । (कस्यैतत्)

गन्धर्वः—महेन्द्रस्यैतत् ।

सखी—सो वि वंतुकामो विअ दिंसदि माहाळाओ ।

(सोऽपि वक्तुकाम इव दृश्यते महाराजः ।)

(पुनर्नेपथ्ये)

अरे सुरेश्वरंमन्य ! किमन्यैर्दुरालापैः ? [1]तिष्ठसि चेद्रणाङ्कणे क्षणमुपलप्स्यसे मदीयमहिमानम् । [2]यदुदीरितमधुनापि पुरन्दरोऽस्मीति तदपि गृहीतास्पद्वेषस्य युक्तमिव प्रतिभाति । मया खलु—

i) उद्दण्डचण्डरणशौण्डकठोर[3]काण्ड-
सद्यः प्रखण्डितपतद्भवदीयमूर्ध्ना ।
निर्वर्तते जयरमासमदप्रयुक्त-
निर्वेलपातिमणिकंतुक[4]खेलनश्रीः ॥ ३ ॥

उर्वशी—एदं कंस । (एतत्कस्य)

---

टिप्पणी—i) उद्दण्ड इति । उद्दण्डः उत्थितः चण्डरणे भीकरयुद्धे शौण्डस्य चतुरस्य यः कठोरकाण्डः कठिनः तरुस्कन्धभागः तेन प्रखण्डितः अत एव पतन् पतमानः भवदीयः मूर्धा, तेन जयरमायाः जयलक्ष्म्याः समदप्रयुक्तः आनन्दातिरेकेण प्रयुक्तः यः निर्वेलं यथा तथा पाती मणिकन्तुकः—मणिमयकन्दुकः तस्य खेलनश्रीः निर्वर्तते आचर्यते इति । अयं भावः—अहं रणवीरः । अधुनाहं उद्दण्डेन कठोरेण तरुकाण्डेन भवदीयं मूर्धानं खण्डयामि । सः मूर्धा जयलक्ष्म्याः कन्दुकक्रीडने कन्दुक इव भवति । यतः क्रीडायां कन्दुकः इतस्ततः यथा

---

[1] तिष्ठसि रणाङ्कणे—ग [2] यदुदितमधुना पुरन्दरोऽस्मीति—क
[3] काण्डसद्यः—क [4] केलनश्रीः—क

गन्धर्वः—तस्यैव महाराजस्य ।

सखी—अदिमेंतं खु संणाहवंता [1]वंटेदि दुवे वि ।

(अतिमात्रं [2]खलु संनाहवन्तौ वर्तेते द्वावपि ।)

उर्वशी—(सखीमपवार्य) अवि णाम [3]विजैणं पेंखिसिह्म पुळूळवसं । अवि णाम एसो पळाएदि महेंदो ।

(अपि नाम विजयिनं पश्यावः पुरूरवसम् । अपि नामैष पलायते महेन्द्रः ।)

सखी—हळा ! अळं एदिणा विदंक्केण । रणकंकसो खु [4]एसो राआ ।

(हला ! अलमेतेन वितर्केण । रणकर्कशः [5]खलु एष राजा ।

गन्धर्वः—इतः पश्यतं भवत्यौ ।

i) [6]उत्तालतालतरुकाण्डकृतायुध[7]श्रीतत्तादृगारचितसामरसम्प्रदायौ ।
मत्त[8]द्विपावभवताम्

(उभे सकौतुकं पश्यतः)

ii) अचिरोपघात वित्रस्तएष दिशमश्वति हन्त पूर्वाम् ॥ ४ ॥

---

टिप्पणी—-पतति तथा तव मूर्धापि इतस्ततः पतति । अतः जयश्रीः तव मूर्धानमेव कन्दुकं कृत्वा आनन्देन क्रीडतीव प्रतिभातीति ॥ शक्वरीछन्दसि–वसन्ततिलकावृत्तम् ॥

i) महेन्द्रराजानौ समरसम्प्रदाये चतुरौ । अधुना तौ उन्नततालवृक्षस्य, मूलमारभ्य शाखापर्यन्तं स्थितं काण्डभागमेव आयुधं कृत्वा नियुध्यतः । इदानीम् उभावपि मदोद्धतौ गजाविव स्तः ।

ii) सद्यः हननैः भीतोऽयमिन्द्रः प्राचीमाशां गच्छति इति । पुरूरवसः शस्त्राघातेन भीतः इन्द्रः पूर्वां दिशं प्रति पलायित इति भावः ॥

---

1 वंटदि–ग
2 'खलु'–इति पदं 'ग' प्रतौ नास्ति ।
3 जइंण पेंखिसंह्म–ग
4 सो राअ–क
5 खलु स राजा–क
6 उद्दालताल–ग
7 श्रीस्तत्तादृग्–ग
8 द्विपामभवताम्–क

उर्वशी—(सखीमपवार्य) हळा! दिंठिआ [1]वंढामहे [2]सुहोवं[3]सुदिए एदाए जंत पुंव्रदिसा [4]वंळहंस पळाहवो ळंखिअदि।

([5]हला! दिष्ट्या वर्धावहे सुखोपश्रुत्यानया। यत्र पूर्वदिशावल्लभस्य पराभवो लक्ष्यते।)

सखी—अह इं (अथ किम्)

गन्धर्वः—i) कवचप्रभाकवचिताद्रिमेखला-
मणिबृन्ददत्तदिनदीपिकाभ्रमौ।
निजमण्डलाग्रनिबिडप्रभाझरी-
निचिताम्बरौ सुरनरौ नियुध्यतः॥ ५॥

किञ्च—ii) लक्षीकृत्यपरस्परं विसृजतोरक्षीणकौक्षेयकौ
रक्षो[6]जीवितभक्षणप्रवणतादीक्षानुभावक्षमौ।

---

टिप्पणी—पूर्वदिशः अधिपतिरिन्द्र इति प्रथित एव॥ शक्वरीछन्दसि वसन्ततिलकावृत्तम्॥

उत्तालतालेति पद्ये पूर्वार्धे 'कृतायुधश्रीतत्ताद्दगारचित' इत्यत्र समासविषये अर्थानुसन्धानविषये च आलोचनीय इति प्रतिभाति।

i) कवचेति। महेन्द्रराजानौ अन्योन्यं नियुध्यतः। भासमानकवचधारिणौ तावुभौ। कवचप्रभया कवचिताद्रिमेखलामणिसमूहदत्तदिनदीपिकाभ्रमौ अभवताम्। अर्थात् एकत्र कवचकान्तिः। अन्यत्र पर्वतमध्यभागस्थितमणिसमूहकान्तिः। उभाभ्यामेतौ दिनदीपिकाभ्रान्तिमुत्पादयतः। एवमेव अनयोरुभयोः परितः प्रभावळिः आसीत्। तया अम्बरमावृत्तमासीदिति भावः॥ अतिजगतीछन्दसि मञ्जुभाषिणीवृत्तम्॥

ii) अनयोः युद्धवर्णनमत्र कृतम्। तयोः कौक्षेयकौ अक्षीणौ। राक्षससंहरणे समर्थावास्ताम्। परस्पराघट्टनेन कवचस्थिताः निसर्गकठिनाः

---

[1] वढामहे—क [2] सुहोवंसुदीए एदाए—ग [3] सुदिए एदएदाए क
[4] वंळहंस—क [5] 'हला'—इति पदं ग—प्रतौ नास्ति। [6] जीवितमाक्षण—क

प्रक्षुण्णा मणयो वहन्ति कवच[1]प्रख्यापिताश्चूर्णिता:
द्राक्षापाकदशां निसर्गकठिना रूक्षोद्भवं मार्दवा: ॥ ६ ॥

परस्पराघातितशस्त्रनिर्गळत्पटुस्फुलिंगा: परितोऽद्रिमेखलाम् ।
पतन्ति दुर्दान्तविमर्ददुर्दशाभृशोदितक्रोधपरम्परा इव ॥ ७ ॥

**उर्वशी**—ण [2]संकुणोमि समळंस पेंखणे वि । वंचिदंह्मि णेंतणिमीळणासहेण विहिणा ।

(न शक्नोमि समरस्य प्रेक्षणेऽपि । वञ्चितास्मि नेत्रनिमीलनासहेन विधिना ।)

(इति सभयं सखीमालिङ्गति)

**सखी**—हळा ! मा कादरा होहि । एदं खु तुह वामणेंतचळणादिअं उण जादं कहेदि कुसळं [3]महाळाअंस ।

(हला ! मा कातरा भव । एतत्खलु तव वामनेत्रचलनादिकं पुन: जातं कथयति कुशलं महाराजस्य)

---

टिप्पणी—मणय: प्रक्षुण्णा:, प्रख्यापिता: चूर्णिता: मार्दवाश्च सत्य: द्राक्षापाकस्थितिं वहन्तीति । अत्र रूक्षोद्भवमित्यस्यानुसन्धानं मृग्यम् इति भाति । अतिधृतिछन्दसि शार्दूलविक्रीडितवृत्तम् ॥

परस्परेति । अन्योन्यं युद्धे परस्परशस्त्राघातेन निस्सृता: पटुस्फुलिङ्गा:—तीक्ष्णा: अग्निकणा:, मिथ: दुर्दान्तविमर्ददुर्निवारदशया अत्यन्तं समुत्पन्ना: क्रोधपरंपरा इव, पर्वतोपत्यकां परित: पतन्ति ॥ अर्थात् उभावपि अत्यन्तं कुपितौ । तयो: शस्त्राघातेन अग्निकणा: सर्वत: समुत्पतन्ति स्म । तादृक् भयानकमासीत्तयोर्युद्धम् इति भाव: ॥ जगतीछन्दसि वंशस्थवृत्तम् । "जतौ तु वंशस्थमुदीरितं जरौ" इति तल्लक्षणम् । (वृत्त र. ३ अ)

---

[1] प्रख्याततः—क [2] संखुणोमि—क [3] महाराअंस—क

गन्धर्वः—अये ! कथञ्चित् धैर्यमालम्ब्य पश्यतम् । पश्यतम् ।

i) आलीढपादलक्षितमक्षिभृशारुण्यदर्शितक्रोधम् ।
आयोधनमिदमुभयोः प्रायो[1दातीव] धैर्यमपि दृषदाम् ॥ ७॥

उर्वशी—कहं अंजवि जअपळाहवौ ण 2ळंखिअदि ।

(कथमद्यापि जयपराजयौ न लक्ष्येते)

सखी—अचिळादो एव्व पुडिहविस्सदि ।

(अचिरादेव स्फुटीभविष्यति)

गन्धर्वः— ii) अनयोर्विनयो3ज्झनैकभाजोः
अवकीर्णारुणकीर्णजालमग्रे
असियुग्ममिहानुरूपमूहे
न किमग्रं निजमण्डलाग्रनाम्नः ॥ ९ ॥

---

टिप्पणी – i) आलीढ इति । उभयोर्युद्धमतिभीकरमासीत् । कोपात् उभयोर्नयने रक्ते स्तः । पर्वतोपत्यकायां दृढं पादौ विन्यस्य नियुध्यतः स्म । प्रायः दृषदाम्—पर्वतशिलानां धैर्यमपि काठिण्यमपि दातीव-लुनातीव दृश्यते स्म इति भावः ॥ अत्र ‘आलीढपादलक्षितम्’ इत्यस्यार्थः अस्पष्टः दृश्यते । गत्यन्तराभावात् तथैव दत्तम् ॥ मात्राछन्दसि-गीतिवृत्तम् ॥ उत्प्रेक्षालङ्कारः ’

ii) अनयोरिति । नयमार्गविहीनयोस्तयोरसियुग्मं अग्रे अरुणवर्णभाः विकीर्य, स्वकीयमण्डलाग्रनाम्नः-अनुरूपं वर्तते इति । असियुग्मं स्वच्छं निशितधारायुतं च सत् परस्परघर्षणेन अरुणवर्णस्फुलिङ्गान् प्रसरतीति भावः ।

---

[1] देतीव–इति ‘ग’ प्रतौ, ‘धेतीव’ इति ‘क’ प्रतौ च पाठः दृश्यते । स च ‘दातीव’ इति भवेत् । दाप–लवने इति धातुः अदादिः । स एव युक्तः पाठः इति निश्चित्य आवरणे दत्तः । [2] ळंखिअंदि–क [3] ‘ज्झ’ इत्यक्षरं ‘क’ प्रतौ लुप्तम् ।

वयमपि भर्तुरानृण्यसम्पादनाय चित्ररथोपदिष्टपथेन नाथमेव अभिगच्छामः ।

i) आभीलासुरसङ्घदुर्भरजरीजृम्भन्मदारम्भण-
क्षोभप्रापणकोपनप्रतिभयप्रायःकराळासिभिः ।
अस्माभिः किमयं युयुत्सति नरः कश्चिद्धरांशांशक-
प्राप्त्यासिमदातिरेकमदिराव्यापारसंमोहितः ॥ १० ॥

ii) भोः भोः दिक्पालसङ्घाः प्रसरत परितस्सार्वभौमान्तिकं द्रा-
गाध्वं पार्श्वे मघोनः परशुधनुरसिप्रासहस्ताः प्रशस्ताः ।
ताड्यन्तां भेरिकाद्याः प्रसभमभिहतैस्सत्वरं जागरूकैः
एकोऽपि प्रौढरक्षोदळनचणभुजासारसान्द्रो नरेन्द्रः ॥११॥

---

टिप्पणी—" ससजा विषमे यदा गुरुः सभरास्याल्ललिता समे तगौ " (वृत्त. र-४ अ) इति लक्षणानुसारात् ललितानामकमर्धसमं वृत्तं भवति ।

i) आभीलासुरसङ्घ इति । भीकैरसुरैस्समं युद्धकरणसन्दर्भे दुर्दान्तं विराजमानं तेषां मदारम्भणं क्षोभयितुं वयं सर्वे देवाः कुपितास्सन्तः भयानकैरसिभिः युयुधिमहे । एतादृशा वीरा वयं तान् निर्जित्य रेजिमहे अयं तु राजा धरायाः एकदेशस्य एकदेशे स्वामी भूत्वा, धरांशस्य एकदेश-लाभेनापि मदातिरेकं प्राप्य मदिरापानमत्त इव मोहितो वर्तते । यः कश्चिन्नरोऽयं अस्माभिर्वीरैस्सह युयुत्सतीति चेत् चित्रम् । वयं क्व । सः क्व । साम्यमेव नास्ति अस्माभिः तस्येति भावः । अतिधृतिछन्दसि—शार्दूलविक्रीडितवृत्तम् । सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति तल्लक्षणम् (वृत्त र-३ अ

ii) भोः भोः इति । भोः भोः दिक्पतिसमूहाः । सार्वभौमस्य परितः झटिति गच्छत । प्रथिताः यूयं सर्वे परशुधनुरसिप्रासाद्यायुधानि करे धृत्वा इन्द्रपार्श्वे आध्वम् । शत्रोः आक्रमणे सन्नद्धाः यूयं सर्वदा

गन्धर्वः — चित्ररथसमाहूताना सुराणामेतत् ।

उर्वशी —अंह्महे एंको एंव सो [1]मणो[रह]वंळहो [2]संवाणं सुपंवाणं रणपंतंति वेवइ मे हिअअं ।

(अहो ! एक एव स मनोरथवल्लभः सर्वेषां सुपर्वाणां रणपात्रमिति वेपते मे हृदयम् )

सखी—संचं एदं । तहवि [3]तेंळोंकवीळो खु [4]सहाआवेंखा णंधि एदंस ।

(सत्यमेतत् । तथापि त्रैलोक्यवीरः खलु सहायापेक्षा नास्त्येतस्य ।)

(नेपथ्ये)

रे, रे, गीर्वाणापशदाः । तिष्ठत [5]पुरः, तिष्ठत [6]पुरः ।

गीर्वाणद्रुपरश्वधास्सुरचमूजीमूतझंझानिलाः
तेखध्वान्तनिकृन्तनारुणकरा देवाद्रिवज्रव्रजाः ।

---

टिप्पणी—जागरूका भवेत । यतः स राजेन्द्रः यद्यपि एकः । अथापि वीरः । मदोद्धतानां राक्षसानां नाशकोऽयं शत्रुसंहरणकार्ये चतुरः प्रथितबुजबलश्च वर्तते । अतः तेन सह जागरूकैर्भवद्भिः योद्धव्यमिति भावः ॥ प्रकृतिछन्दसि स्रग्धरावृत्तम् । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति तल्लक्षणम् । (वृ.र-३ अ)

गीर्वाणद्रु इति । वयं च भटाः नारायणमुनेराज्ञानुसारात् अत्र संमिलिताः । वयं च गीर्वाणा एव द्रवः वृक्षाः तेषां परश्वधाः-परशवः । परशुः यथा वृक्षान् छिनत्ति, तथा वयमपि देवान् छिन्द्मः । सुरचमूः एव जीमूतः मेघः तस्य झंझानिला वयम् । झंझावातः मेघान् नाशयति यथा तथा वयमपि सुरान् नाशयामः । ते प्रसिद्धा वयं च खस्य आकाशस्य ध्वान्तं गाढन्धतमसं तस्य निकृन्तने कर्तने अरुणकराः-सूर्यकिरणाः । सूर्यरश्मयः

---

[1] मणोहरवंळहो–ग, मणोरळवंळहो–क [2] संवेण–क [3] तेंळोंखवीळो–क
[4] सहाआपेंखा–ग [5] पुरतः–ग [6] पुरतः–ग

[1]आदित्याम्बुधिबाडवाहिभवनप्रक्षोभताक्ष्याळयः
तेऽमी संमिळिता भटा वयममी नारायणाज्ञाधराः ॥ १२ ॥

गन्धर्वः—(साश्चर्यम्) हन्त ! अद्भुतं सृष्टिचातुर्यं भगवतो नारायणस्य । यदनुपदमेव देवानामभियोद्धारो जातास्समायाताश्च ।

उर्वशी—अह्महे किंणु एदं संविहाणं ।

(अहो ! किन्वेतत् संविधानम्)

---

टिप्पणी-आकाशे तमः दूरीकुर्वन्ति यथा तथा वयं तमोरूपिणः देवान् संहरामः । यद्वा आकाशस्थिततमोदूरीकरणकिरणवत् कान्तिप्रदा वयम् । अस्मदीयैः शरीरकिरणैः तमः दूरीभवर्तति । देवाद्रिवज्रव्रजाः–देवा एव अद्रयः तेषां वज्रव्रजाः–वज्रायुधसमूहाः । वज्रायुधं यथा पर्वतपक्षानच्छिनत् तथा वयं देवान् कृन्तामः इति । आदित्याम्बुधिबाडवाश्च ते अहिभवनप्रक्षोभताक्ष्याळयश्च इति कर्मधारयः । आदित्याः सुरा एव अम्बुधयः तेषां बडबाः बडवानलाः । बडबाग्निः समुद्रं यथा शोषयति तथा वयमपि तान् शोषयामः इति । अहीनां भवनं तस्य प्रक्षोभणे ताक्ष्याळयः गरुडसमूहाः । गरुडः सर्पान् यथा क्षोभयति तथा वयमपि देवान् क्षोभयामः इति । एवंभूताः शक्तिविशिष्टा वयं देवानां क्षोभदायकाः तेषां नाशकाश्च इति भावः । अत्र रूपकसमासः सर्वत्र कार्यः ॥ अतिधृतिछन्दसि शार्दूलविक्रीडितवृत्तम् । "सूर्याश्वैर्मसजास्तताः सगुरवः शार्दूलविक्रीडितम्" इति लक्षणम् । (वृत्त-र-३ अ)

---

[1] आदित्याम्बुधिवाडवा ऋभुफणप्रक्षोभताक्ष्याळयः–क अत्र पाठे 'ऋभुफणप्रक्षोभ' इत्यत्र ऋभवः देवाः ते एव फणाः, तासां प्रक्षोभणे ताक्ष्याळयः गरुडसमूहाः इत्यर्थः भवति । अत्र 'ऋभुफणिप्रक्षोभ' इति पाठकरेण धर्मिणोरभेदः स्वरसः युक्तश्चेति प्रतिभाति । तदा ऋभवः एव फणिनः सर्पाः तेषां प्रक्षोभणे ताक्ष्यसमूहाः इति स्वरसार्थस्सिध्यति ।

सखी—हळा ! किंणु अंध अंचलिअं भअवंताणंवि णवीणसिंठिकाळणे ।

(हळा ! किन्वत्राश्चर्यं भगवतामपि नवीनसृष्टिकरणे ।)

गन्धर्वः—पश्यतं समरसंरम्भमुभयेषाम् ।

क्वचिद्भ्रमित[1]पट्टसं क्वचिदुदीतसिंहस्वनं
क्वचिद्धृदयभेदनप्रधनवीरवादोल्बणम् ।
क्वचिच्छरधनुष्करप्रसभपातिसादि[2] व्रजं-
प्रचारनयनोत्सवं जयति जन्यभूमीतलम् ॥ १३ ॥

---

टिप्पणी—क्वचिद्भ्रमित पट्टसमिति । इदं जन्यभूमीतलं रणाङ्गणं प्रचारनयनोत्सवं जयति-विराजते । नयनमनोहरं वर्तते अतः रुद्ररमणीयमिति । क्वचित् भ्रमितपट्टसं-पट्टसं नाम आयुधविशेषः भ्रमितानि पट्टसानि यत्र तत् । पट्टसानां भ्रमणमेकत्र । क्वचित् उदीतसिंहस्वनम्, एकत्र सिंहनादसदृश-नादः । क्वचित् हृदयभेदनप्रधनवीरवादोल्बणम् । हृदयानां भेदनं, प्रधनं युद्धम् । प्रधने वीराः प्रधनवीराः युद्धवीराः । तेषां वादोल्वणं तद्यत्र तदिति । युद्धवीराणां हृदयदारणः स्पष्टः वादकलहः एकत्र । क्वचिच्छरधनुष्करप्रसभपातिसादिव्रजं । सादिनः अश्वारोहाः । एकत्र धनुषि शरसन्धानं कृत्वा बाणवर्षणं कुर्वतां सादिनां समूहः । एतादृशं रणाङ्गणं जयति पुरतः इति ॥ 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणमित्यमरः (क्षत्रियवर्गः) । 'मोघं निरर्थकं स्पष्टं स्फुटं प्रव्यक्तमुल्बणमित्यमरः (विशे-नि-व) "रथिनः स्यन्दनारोहा अश्वरोहास्तु सादिनः" (क्षत्रि-व) इत्यमरः ॥ जन्यभूमीतलम्—'युद्धमायोधनं जन्यमित्यमरः । जन्यभूमीतलम् रणाङ्गणमिति ॥ अत्यष्टिछन्दसि—पृथ्वीवृत्तम् । 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः इति लक्षणम् (वृत्त-र- -अ)

---

[1] पंटसं—क [2] व्रजप्रचार—क

उर्वशी—को एसो इसिविअ अंचिअ दुवेणं मंझंमि ळणं णिवाळअंतोविअ दिंसदि ।

(क एष: ऋषिरिव आगत्य द्वयोर्मध्ये रणं निवारयन्निव दृश्यते)

सखी—अह इं (अथ किम् ।)

गन्धर्व:—रूपसाम्यादनुमिनोमि भगवान् नारद इति ।

(नेपथ्ये)

भो भो: सुरेश्वरनरेश्वरौ श्रृणुतमेतत् । यद्भगवता मम गुरुणा नारायणेन महर्षिणा समाज्ञप्तं भवन्तावपि—

तिष्ठत्वेषा निखिलजगतीभूषणं सौरनारी
दर्पोल्लासप्रशमनचणा कापि साधारणीति ।
सृष्टा सेयं किमिति भवतोराग्रहस्तद्ग्रहेऽभूत्
सोऽयं भर्ता भवतु न पर:

उर्वशी—तादंस आदेसो वि पडिहादि । कंस वा [1]दिंणां देणंति चिंतेमि ।

(तातस्यादेश इव प्रतिभाति । कस्य वा [2]दत्ता तेनेति चिन्तयामि)

सखी—हळा ! किंणु चिंतेसि ? [3]अहिंपाअविंणादा खु [4]भअवंतो ।

(हळा ! किं नु चिन्तयसि ? अभिप्रायविज्ञाता खलु भगवान्)

---

टिप्पणी— समस्तजगदाभरणमियं सुराप्सरा: उर्वशी, दर्पस्य उल्लास: तस्य प्रशमने चणा, चतुरा इति तु सत्यमेव। अथापि इयं स्वर्लोके साधारणी नारी भवत्वित्येवंभावनया मया सृष्टा । इत्थं स्थिते तां ब्धुंल किमर्थं युवरोरन्योन्यं कलह: । स माभूत् । सा यमिच्छति स एव तस्या: भर्ता, न पर: । इति ॥ अत्यष्टिच्छन्दसि मन्दाक्रान्तावृत्तम् । "मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् " इति तल्लक्षणम् (वृत्त-र-३ अ)

---

[1] दिंणं ते णं ति–ग [2] दत्तं तेनेति–ग [3] अहिंपायविंणादो खु–ग

**गन्धर्वः**—श्रोतव्यमुपर्यपि ।

(नेपथ्ये)

सैव यं कामयेत ॥ १४ ॥

**उर्वशी**—(सखीमपवार्य) अंम्हहे कलुणालुंतणं अंजंस ।

(अहो करुणालुत्वमार्यस्य)

**सखी**—अदिमेंतंति भणिदंवं ।

(अतिमात्रमिति भणितव्यम् ।)

न्यस्ताः कुत्रचिदेव शस्त्रनिचयाः प्रस्तौति लज्जाभरः
सर्वेषामपि मौनसंपदमयं वैराग्यभाग्यादिव ।
अन्योन्यं सुहृदोर्महेन्द्रनृपयोरालोकनं पूर्ववत्
संरंभं तु [1]विमुञ्चत प्रशमतामायाति वीरो रसः ॥ १५ ॥

(नेपथ्ये)

टिप्पणी—न्यस्ताः इति । नारायणमुनेराज्ञया-सर्वे युद्धं तत्यजुः । तेषां शस्त्रसमूहाः कुत्रापि निहिताः । युद्धेन वयं दोषभाजः अभवाम इति लज्जिताः ते सर्वे तूष्णीं स्थिताः । तेषां लज्जाभर एव मौनसंपदं प्रस्तौति । नारायणमहर्षेः वैराग्यभाग्यादिव मित्रयोर्देवेन्द्रराज्ञोः मिथः अवलोकनमपि पूर्ववत्सम्पन्नम् । अर्थात् परस्परक्रोधं त्यक्त्वा प्रागेव स्नेहावलोकनं प्राप्तवन्तौ । अतः सर्वे यूयं युद्धसंरंभं संत्यजत । वीरो रसः अधुना शमस्थितिमायातीति ॥ अतिधृतिछन्दसि – शार्दूलविक्रीडितवृत्तम् । "सूर्याश्वैर्मसजास्तताः सगुरवः शार्दूलविक्रीडितम्" (वृत्त. र. ३. अ) इति लक्षणम् ।

[1] विमुञ्चतु प्रशमताम्–ग

i) मन्दारकुसुममालामादायाभ्येति सा वरारोहा ।
यं कामयेत मनसा तं कुर्यान्नाम तत्परिष्कारम् ॥ १६ ॥

सखी—हला ! एसो तुह [1]मणोळहंसावसळो ।

([2]हला ! एषः तव मनोरथस्यावसरः)

उर्वशी—(सहर्षम्) [3]जह रोअदि पिअ[4]सहीए ।

([5]यथा रोचते प्रियसख्यै)

(इति निष्क्रान्ते)

गन्धर्वः—कस्य वा कण्ठे परिष्करोति मन्दारमालामिति

(ससंभ्रमं दृष्ट्वा)

अहो ! धन्यता पुरूरवसः ।

ii) ' हित्वा कामुकमिन्द्रं भर्तारं यं किलोर्वशी चक्रे ।

(विमृश्य)

यं कामयेत लक्ष्मीः सुलभा तस्यैव सा न चान्यस्य ॥ १७ ॥

---

टिप्पणी—i) मन्दारकुसुममालामिति । नारायणमुनेराज्ञावचनमिदम् । मन्दारपुष्पमालां करे धृत्वा मत्तकाशिनी साऽऽगच्छतीदानीम् । सा मनसा यमिच्छति स एव तस्याः पाणिं गृह्णातु इति ॥ मात्राछन्दसि गीतिवृत्तम् ॥

ii) हित्वेति । इन्द्रः कामुक इति प्रसिद्धः । तं परित्यज्याधुना उर्वशी पुरूरवसमेव स्वकीयं भार्तारम् स्वीचकार । सा यं कामयेत, तस्यैव लक्ष्मीः सुलभा भविष्यति । अर्थात् लक्ष्मीः तमेवायते । नान्यं पति । अतः इदानीं पुरूरवसमेव लक्ष्मीः गच्छति । स एव धन्यः इति ।

मात्राछन्दसि—गीतिवृत्तम् ।

---

[1] मणोरहंस अवसळो–ग  [2] ' हला ' इति पदं ' ग ' प्रतौ नास्ति ।
[3] जं रोअदि–ग  [4] सहिए–क  [5] यद्रोचते–ग

(नेपथ्ये)

अये सङ्क्रन्दन! किमिति चिन्तयसि ?

अनुभूय भोगपूगानभिलषतु त्वामतः परं सैषा ।
कमले कृतवसतिर्या [1]कमला न किमेति कैरवं सायम् ॥ १८॥

गन्धर्वः—अहो! वचनरचना मुनीन्द्रस्य ।

(निर्वर्ण्य)

[2]कथमन्तर्हित एव ससैन्यो महेन्द्रः !

नारायणीया भटाश्च । तदहमपि

गन्धर्वराजमनुगच्छामि ।

इति निष्क्रान्तः

---

टिप्पणी—अये! सुरेन्द्र! त्वं मा चिन्तय । अधुना उर्वशी सुखसमूहाननुभूय, ततः त्वामभिलषतु । सा अवश्यं त्वत्समीपमागमिष्यत्येव । तावत्पर्यन्तं भोगान् अनुभवितुं तां मुञ्च । कमले निवसन्ती कमला लक्ष्मीः कान्तिश्च सायं सितोत्पलं न गच्छति किम् । अवश्यं गच्छत्येव । एवमेवेयमुर्वश्यपीति भावः ।

पूगः—वृन्दम् । ("पूगः क्रमुकवृन्दयोः" इत्यमरः) नानार्थवर्गः

कैरवम्-सितोत्पलम् ('इन्दीवरं च नीलेऽस्मिन् सिते कुमुदकैरवे'— इत्यमरः । वारिवर्गः)

मात्राछन्दसि—गीतिवृत्तम् ।

---

[1] 'कला' इति पदमस्ति 'क' प्रतौ । मध्ये 'म' इत्यक्षरं लुप्तम् ।

[2] कथमन्तर्हितस्ससैन्य एव महेन्द्रः—क

(ततः प्रविशति [1]स नारदो राजा सख्युर्वशी च)

राजा—(हर्षरसम[2]भिनीय) भगवन् ! एष ते सकलसुकृतफल[3]परिणामः प्रणामः ।

(इत्युर्वश्या सह प्रणमति)

नारदः—आयुष्मतोः पुन[4]र्भूयादायुष्मत्ता च तादृशी ।

राजा—(सहर्षम्) अस्त्यर्थोऽन्योऽपि किम् ?

नारदः—सूनुरायुराविर्भविष्यति ।

राजा—अनुगृहीतोऽस्मि ।

सखी—हळा ! महंतो खु [5]अणुंगहो [6]महे[सि]णो वंटदि ।

(हला ! महान् खलु अनुग्रहो महर्षेर्वर्तते)

उर्वशी—(सलज्जं कटाक्षेण वारयति ।)

नारदः—'लब्धा जयश्रीर्भवता च कन्या
लब्ध्वा त्वमायुर्द्वयमाशिषा मे ।
तत्सार्वकालं भवतु प्रियेयं
त्वत्सार्वभौमत्वविवृद्धये स्यात् ॥ १९ ॥

टिप्पणी—त्वमिन्द्रजिदधुना । जयश्रीः तव वशमागता । उर्वश्यपि त्वदीया हृदयवल्लभा जाता । मदीयेन आशीर्वादेन त्वम् आयुनामकं पुत्रं, आयुश्च लब्ध्वा विलस । यावज्जीवमनवरतम् उर्वशीयं त्वदीया मनःप्रिया भूत्वा, सार्वभौमत्वाभिवृद्धये स्यादिति नारदः आशीर्वदति राजानम् । इन्द्रवज्रावृत्तम् ।

[1] नारदः–क [2] मभिनयन्–क [3] परिणामप्रणामः–क
[4] भूया आयुष्मत्ता–क [5] अंणुराहो–क [6] महेशिणो–क, महइसिणो ग

तत्साधयन्तु सर्वे पुरीमेव ।

राजा—भवद्भिरपि सहैवागत्य नयनोत्सवः कारयितव्यः ।

नारदः— जित्वा सुरारिसमितिं समितिप्रकामं
कृत्वा सुरेन्द्रमपि निर्जितमात्तकामम् ।
[1]नीत्वा वशं च दयितां जयसीह कामं
क त्वादृशोऽस्ति नयनोत्सवदः प्रजानाम् ॥ २० ॥

उर्वशी—(सखीमपवार्य) उइदो खु [2]वअणोवंणासो महेसिणाहंस ।

(उचितः खलु वचनोपन्यासः [3]महर्षिनाथस्य)

सखी—एसो खु [4]भअवदो बंह्मणो तणओ ।

किंणु हिंजदि एदंस [5]वअणविळाससंदंभेसु ।

(एषः खलु भगवतो ब्रह्मणः तनयः । किं नु हीयते एतस्य वचनविलाससन्दर्भेषु)

राजा भगवन् [6]इदमखिलं हि भवत्प्रसादविलसितमेव ।

---

टिप्पणी— त्वं सुररिपुसङ्घं विजितवान् । रणचतुरं, कामुकं च देवेन्द्रमपि पराजितं कृतवान् । दयितामुर्वशीं स्वीकृतवान् । इह सर्वोत्कर्षेण राजमानोऽसि । प्रजानां नयनानन्दकारी ह्यभूः । तव सदृशः प्रजानां हितदायकः, आनन्ददायकश्च अन्यः कः कुत्राऽस्ति ? यः कोऽपि नास्तीति भावः ॥ वसन्ततिलकावृत्तम् ॥

---

1 'नीत्वा' इति पदं 'क' प्रतौ नास्ति ।

2 वअणोवणासोहो महेशिणराहंस–क 3 महर्षिराजस्य–क

4 भअवंतंस बंह्मणो–क 5 वचणविळाससंदंमेसु–क

6 इदमखिलमपि· ग

प्रकटितदशः कामः कामं प्रियागुणवर्णनैः
श्रवणपदवीमानीतैस्तैरकृत्रिमवादिभिः ।
अपि परिहृतप्रत्यूहोऽयं कृतार्थदशां त्वया
सपदि गमितो यस्मात्सन्तः परार्थविधायिनः ॥ २१ ॥

उर्वशी—हळा ! एसो एंव अणुराअं [1] उंपादिअ वंळहंस अतिमेंतं सहाअं किदवं तोंति [2]अंचळिअमंचळिअं ।

(हला ! एष एव अनुरागमुत्पाद्य वल्लभस्य अतिमात्रं सहायं कृतवान् [3]इत्या[1]श्चर्यम् आश्चर्यम्)

सखी—किंणु [4]अंध अंचळिअं । सिंसो खु तुह पिदुणो एसो । अदो तुह एंव सुहोदंकं चिंतेदि ।

(किन्त्वत्राश्चर्यम् । शिष्यः खलु तव पितुरेषः)

---

टिप्पणी -- प्रकटितदशः इति । श्रवणपदवीमानीतैः—कर्णयुगलं गमितैः अकृत्रिमवादिभिः नैसर्गिकवादिभिः तैः प्रसिद्धैः प्रियागुणवर्णनैः—प्रियायाः उर्वश्याः गुणकथनैः प्रकटितदशः—दशावस्थां प्रकटितः अयं कामः अधुना कामं परिहृतप्रत्यूहः निवारितान्तरायस्सन् त्वया कृतार्थदशामपि कृतकृत्यतास्थितिं सपदि झटिति गमितः प्रापितः । यस्मात्सन्तः परार्थविधायिनः खलु । स्वाभाविकैः उर्वश्याः सौन्दर्यादिगुणैरहमाकृष्टः । ततः कामः प्रकटितदशस्सञ्जातः । अर्थात् तस्यामहमतीवानुरक्तोऽभवम् । आवयोर्मध्ये आगतः प्रत्यूहः तवानुग्रहेण परिहृतः । तां लब्ध्वाऽहं कृतकृत्यस्सञ्जातः । सर्वमिदं तवानुग्रहमूलमेव । सज्जनाः परोपकारिणः किल ! सर्वदा । अतः सता त्वया अहं लब्धमनोरथोऽभवमिति भावः ॥ अर्थान्तरन्यासालङ्कारः । अत्यष्टिछन्दसि हरिणीवृत्तम् । "रसयुगहयैर्न्सौ म्रौ स्लौ गो हरिणी तदा" । (वृत्त-र. ३ अ)

---

1 उंपादिआ—क
2 'अंचळिअं'—इत्येकवारमस्ति—ग
3 'आश्चर्यमित्येकवारं-'ग' प्रतौ
4 एंध—क

[1]अत एव शुभोदर्कं चिन्तयति ।

नारदः—*किं सा न लोकैकललामभूता
त्वं सार्वभौमो न किमिन्द्रजेता ।
न श्लाघ्यते सङ्घटनं द्वयोः
सुश्लिष्टसत्कीर्तिवदान्यलक्ष्म्योः ॥ २२ ॥

उर्वशी—(सखीमपवार्य) संवो खु जणो सोजणं [2]अहिणंदेदि ।
(सर्वः खलु जनः स्वजनमभिनन्दति ।)

सखी—ण खु पसंसणं एदं । अंधि एंव संवंवि ।
(न खलु प्रशंसनमेतत् । अस्त्येव सर्वमपि ।)

नारदः—अयमागच्छति सह पुष्पकेण मातलिः । तद्गम्यतामनेन पुरीं प्रति सदयितेन भवता ।

राजा—[3]यथाज्ञाप्यते सुरर्षिचन्द्रेण ।

---

टिप्पणी—*किं सेति । सा प्रसिद्धा उर्वशी लोकैकललामभूता न किम् ? त्रिभुवनैकसुन्दरी न किम् ? अवश्यं त्रिभुवनैकसुन्दर्येव । इन्द्रजित् त्वं सार्वभौमः न किम् । सत्यं चक्रवर्ती एव । सत्कीर्तिवदान्यलक्ष्म्योः द्वयोः सत्सङ्घटनं प्रशांसायै भवति । सा तावत् रूपश्रीः, गुणवती शीलवती च । त्वं तु शूरः, वीरः, धीरः, विनीतः, प्रजानुरागी, बुद्धिमान्, दानशौण्डश्च । युवयोर्मिथं सङ्घटनमपि प्रशंसनीयमेवेति भावः ॥ त्रिष्टुप्छन्दसि इन्द्रवज्रावृत्तम् ॥ स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति लक्षणम् ॥ (वृ. र. ३ अ)

---

[1] अतस्तत्रैव–ग [2] अभिणंदेदि–क [3] यदाज्ञाप्यते–ग

(प्रविश्य मातलिः)

मातलिः—राजन् ! अलङ्करोतु सप्रियो भवान् इदं विमानरत्नम् ।

राजा—इदं गम्यते । किन्तु ।

नारदः—सावशेषमिव भवद्वचः । किं ते भूयः प्रियमुपहरामि ।

राजा—i) आत्रेदिता या सुदतीमणी प्रा-
गासादिता मय्यनुरागभारात् ।
नारायणस्येव तव प्रसादात्
आराधयामस्सकला[1]श्रयोऽसि ॥ २३ ॥

तथापीदमस्तु ii) भरतवाक्यम्—

यः श्रीरामपुरीविलासवसतिश्श्रीरामनामा विभुः
तस्यानुग्रहसंपदा [2]विजयतां त्रैलोक्यनित्योत्सवः ।

टिप्पणी—i) आत्रेदितेति । नारायणमुनेरनुग्रहेण सा उर्वशी उत्पन्ना, नारीमणिरिति च ख्याता । ततः मयि अनुरागवशात् मां प्रत्यागता । अयं च नारायणस्य अनुग्रह इव तव प्रसाद एव इति मन्ये । नारायण-मुनेरनुग्रहेण उत्पत्तिः ख्यातिश्च तस्याः । तवानुग्रहेण मया सह सम्बन्धः तस्याः । अतः त्वं सकलानामाधारभूतोऽसि । त्वां वयं भक्त्या प्रीत्या च पूजयामः इति राजा नारदं प्रति सप्रेमं वदति ॥ त्रिष्टुप्छन्दसि इन्द्रवज्रावृत्तम् ॥

ii) भरतवाक्यं प्रत्येकं रूपकेषु अन्ते वर्तते । शुभाशं-सनवाक्यमित्यवगन्तव्यम् । रूपकस्यान्ते नटः कथयतीति प्रतीतिरस्ति । भरतः नटः । तस्य वाक्यं भरतवाक्यमिति । अत्रापि राजा शुभमाशंसते ।

[1] श्रयोऽपि—क  [2] विजयते त्रैलोक्य—ग

यस्साहित्यरमाविलासभवनं जीयात् चिरायुः प्रभुः
यस्यौदार्यवशात् भृशं विजयते लोकस्य लोकोत्सवः ॥ २४ ॥

(इति निष्क्रान्तास्सर्वे ।)

[1]इति चतुर्थोऽङ्कः

इति श्रीवेङ्कामात्यविरचितः उर्वशीसार्वभौमो नामा
ईहामृगस्समाप्तः'

---

टिप्पणी—श्रीराम एव प्रभुः । सः श्रीरामपुर्यां निवसति । तस्य अनुग्रहसम्पदैव त्रिभुवने नित्योत्सवादयः प्रचलन्तु । अस्माकं प्रभुः साहित्यलक्ष्मीविलासस्य आश्रयः विराजते । तस्य औदार्यवशादेव लोकः भृशं रराजते । तादृशः लोकोत्सवः लोकानन्ददायकः प्रभुः चिरायुर्भूत्वा जीयादित्याशंसते ॥ अतिधृतिछन्दः । शार्दूलविक्रीडितवृत्तम् । "सूर्याश्वैर्मसजास्ततः सगुरवः शार्दूलविक्रीडितमिति लक्षणम् । (वृत्त-र. ३ अ)

उर्वशीसार्वभौमेहामृगस्सम्पूर्णः

---

[1] 'इति चतुर्थोऽङ्कः' इत्यनन्तरं 'ग' प्रतौ ईहामृगस्सम्पूर्णः । श्रीलक्ष्मीनृसिंहाय नमः । इति वाक्यद्वयं दृश्यते । 'क' प्रतौ नास्ति ।



## उर्वशीसार्वभौमेहामृगे उक्ताः सूक्तयः

—o—



———

## उर्वशीसार्वभौमेहामृगस्य उदाहरणपद्यानाम् अकारादिसूची

—O—

———

# शुद्धाशुद्धपत्रम्

—o—

| अशुद्धः | शुद्धः | पुटसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| १) पाणौः | पाणौ | 5 | 16 |
| २) वाह्यव्यापारम् | बाह्यव्यापारम् | 14 | 6 |
| ३) सूचिक भारती | सूचिका भारती | 14 | 19 |
| ४) पात्यमा ो | पात्यमानो | 20 | 5 |
| ५) कथा रेण | कथादूरेण | 20 | 7 |
| ६) पापन् | पापम् | 20 | 7 |
| ७) त ावोऽपि | तनवोऽपि | 48 | 2 |
| ८) चेद्रसुधे ाक्ति | चेद्रसुधेशक्ति | 48 | 4 |
| ९) यत्कु ना ातेनाऽपि | यत्कुहनाशतेनापि | 53 | 11 |
| १०) गौतम हल्ययोः | गौतमाहल्ययोः | 62 | 8 |
| ११) विद्वांसमपकर्षति | विद्वांसमपकर्षति | 71 | 19 |
| १२) महेन्द्रवियेष | महेन्द्रविषये | 75 | 20 |
| १३) निरांत | नितरां | 79 | 20 |
| १४) घणाघणे वि | घणाघणोवि | 81 | 5 |
| १५) नुज्झदास्ते | नुज्झदास्ते | 85 | 13 |
| १६) सौन्दर्य | सौन्दर्य | 85 | 14 |
| १८) सदृ ी | सदृशी | 85 | 10 |
| १८) क्र धेन | क्रोधेन | 94 | 16 |
| १९) ब्धुंल | लब्धुं | 105 | 19 |
| २१) हो | अहो | 106 | 6 |

# उर्वशीसार्वभौमेहामृगस्य संपादनसमये संशोधनस्य साहाय्यार्थमवलोकिताः ग्रन्थाः

## [List of Reference Books]

### I. हस्तप्रतयः MANUSCRIPTS

1) उर्वशीसार्वभौमेहामृगः—(वेङ्कामात्यविरचितः)
हस्तप्रतिसंख्या — i) P 2586 (ताळपत्रम्)
ii) P 2775 (ताळपत्रम्)
प्राप्तिस्थानम्—प्राच्यविद्यासंशोधनालयः (ORI) मैसूरु.

2) कामविलासभाणः—(वेङ्कमात्यविरचितः)
हस्तप्रतिसंख्या—P 2586 (ताळपत्रम्)
प्राप्तिस्थानम्—प्राच्यविद्यासंशोधनालयः (ORI) मैसूरु.

3) जगन्नाथविजयम्—(वेङ्कामात्यविरचितम्) (पद्यम्)
हस्तप्रतिसंख्या—B 2020 (कर्गजम्)
प्राप्तिस्थानम्—प्राच्यविद्यासंशोधनालयः (ORI) मैसूरु.

4) महेन्द्रविजयडिमः—(वेङ्कामात्यविरचितः)
हस्तप्रतिसंख्या— P 2773 (ताळपत्रम्)
प्राप्तिस्थानम्—प्राच्यविद्यासंशोधनालयः (ORI) मैसूरु.

5) हनुमच्छतकम्—(आञ्जनेयशतकम्) (स्तोत्रकाव्यम्)
(वेङ्कामात्य ..तम्
हस्तप्रतिसंख्या—P 3080 (ताळपत्रम्)
प्राप्तिस्थानम्—प्राच्यविद्यासंशोधनालयः

## II. मुद्रितपुस्तकानि -(PRINTED BOOKS)

1) ऋग्वेदसंहिता
मुद्रकः—प्रकाशकश्च—वसन्तश्रीपादसातवळेकरः
भारतमुद्रणालयम्—औन्ध्नगरम्,(साताराप्रदेशे)—1940

2) तैत्तिरीयारण्यकम्—(भट्टभास्करभाष्यसहितम्)
प्राच्यविद्यासंशोधनालयप्रकाशनम् (ORI), मैसूरु

3) तैत्तिरीयारण्यकम्—(सायणभाष्यसहितम्)
आनन्दाश्रमप्रकाशनम्—पूना

4) तैत्तिरीयारण्यकम्—(सायणभाष्यसहितम्)
Edited by Rajendra Mitra,
Published by :
The Asiatic Society of Bengal, Calcutta,1872

5) दशरूपकम्—(धनञ्जयविरचितम्)
(धनिककृतावलोकव्याख्यायुतम्)
निर्णयसागरप्रकाशनम्—बांबे—1941

6) निरुक्तम् (1–4, 7 अध्यायाः)
शिवनारायणशास्त्री, दिल्लीविश्वविद्यालयः, दिल्ली—1972

7) प्रतापरुद्रीयम्—(विद्यानाथविरचितम्)
(कुमारस्वामिकृतरत्नापणव्याख्यायुतम्)
With English notes of
Kamalashankara Pranashankara Trivedi
बांबे संस्कृतसीरिजसर्वकारीयमुद्रणालयप्रकाशनम्, बांबे

8) रुक्मिणीमाधवाङ्कः —(वेङ्कामात्यविरचितः)
Edited by Smt. B. Mamatha
प्राच्यविद्यासंशोधनालयप्रकाशनम् (ORI), मैसूरु 1991

9) लक्ष्मीस्वयंवरसमवकारः—(वेङ्कामात्यविरचितः)
Edited by Sri. Raghavendra Rao
प्राच्यविद्यासंशोधनालयप्रकाशनम् (ORI), मैसूरु

10) लाट्यायनश्रौतसूत्रम् —(अग्निस्वामिव्याख्यायुतम्)
Published by The Asiatic society
of Bengal Calcutta, 1872

11) वाचस्पत्यम् —(तारानाथतर्कवाचस्पतिभट्टाचार्यविरचितम्)
चौखाम्बा संस्कृतसीरिज आफिस् प्रकाशनम्,
वाराणसी—1969

12) वाल्मीकिरामायणम्
चौखाम्बा संस्कृतसीरिज आफिस् प्रकाशनम्
वाराणसी—1957

13) वीरराघवव्यायोगः —(वेङ्कामात्यविरचितः)
Edited by Sri. B. A. Doddamani
प्राच्यविद्यासंशोधनालयप्रकाशनम् (ORI), मैसूरु—1988

I4) वृत्तरत्नाकरः—(केदारभट्टविरचितः)
निर्णयसागरप्रकाशनम्–बांबे–1948

15) वेदार्थदीपकनिरुक्तभाष्यम्
भाष्यकारः श्रीचन्द्रमणिविद्यालङ्कारपालिरत्न
आर्षकन्यागुरुकुलनरेलुप्रकाशनम् दिल्ली

16) शतपथब्राह्मणम् —(भागः — १)
चौखम्बासंस्कृतसीरिज आफिस् प्रकाशनम्,
वाराणसि–1964

17) शब्दकल्पद्रुमः —(कोशः)
(राजाराजाकान्तदेवबहादूरविरचितः)
मोतीलालबनारसीदासप्रकाशनम्–दिल्ली

18) श्रीमद्भागवतम् —(श्रीव्यासप्रणीतम्)
(अनेकसंस्कृतव्याख्यायुतम्)
संपादकः–श्रीदलसुखरामात्मजः कृष्णशङ्करशास्त्री
भागवतविद्यापीठम्-पूर्णिमा-अहमदाबाद्-१

19) षड्विंशब्राह्मणम्
(संपादकः_जीवानन्दविद्यासागरभट्टाचार्यः), कल्कत्त–1881

20) साहित्यदर्पणः—(विश्वनाथकृतः)
(कृष्णमोहनशास्त्रिकृतलक्ष्मीटीकोपेतः)
चौखम्बा संस्कृतसीरिज आफीस् प्रकाशनम्
वाराणसी—1955

21) सीताकल्याणवीथी—(वेङ्कामात्यविरचिता)
Edited by Sri. Raghavendra Rao
प्राच्यविद्यासंशोधनालयप्रकाशनम् (ORI), मैसूरु—1989

22) अमरकोशः—(कन्नडानुवादांग्लानुवादयुतः)
ल्यियिसूरैस् संपादितः प्रसाराङ्गप्रकाशनम्
मैसूरुविश्वविद्यानिलयः, मैसूरु—1970

23) कर्णाटककविचरिते—(कन्नड)
(आर्. नरसिंहाचार्यकृतम्)
(तृतीयः संपुटः) कन्नडसाहित्यपरिषत्,
बेङ्गळूरु—1974 (Page No. 123)

24) देवीभागवतम्—
(चन्द्रशेखरशास्त्रिकृतकन्नडानुवादसहितम्)
जयचामराजेन्द्रग्रन्थमालाप्रकाशनम्, मैसूरु—1942

25) पद्मपुराणम्—(सृष्टिखण्डः—भाग-१)
(बेलदकेरे सूर्यनारायणशास्त्रिकृतकन्नडानुवादसहितम्)
जयचामराजेन्द्रग्रन्थमालाप्रकाशनम्, मैसूरु—1945

26) पुराणनामचूडामणि—(कन्नड)
(बेनगल् रामराव्-पान्यंसुन्दरशास्त्रिविरचितः)
प्रसाराङ्गप्रकाशनम् मैसूरुविश्वविद्यानिलयः, मैसूरु—1977

27) ब्रह्मवैवर्तपुराणम्—
(बेट्टदपुरकृष्णप्पकृतकन्नडानुवादयुतम्)
जयचामराजेन्द्रग्रन्थमालाप्रकाशनम्, मैसूरु—1954

28) वैदिकसाहित्यचरित्रे—(कन्नड)
(डा. एन्.एस्. अनन्तरङ्गाचार्यविरचितम्) प्रसाराङ्गप्रकाशनम्
मैसूरुविश्वविद्यानिलयः, मैसूरु—1968

29) शब्दार्थकौस्तुभः—(कन्नड)
(प्रायोगिकसंस्कृत-कर्णाटकशब्दकोशः) प्रथमभागः
ग्रन्थकर्ता—प्रकाशकश्च
चक्रवर्तीश्रीनिवासगोपालाचार्यः बेङ्गळूरु—1961

30) Descriptive catalogue of
Sanskrit manuscripts—Volume-8
Editor :—Dr. H. P. Malledevaru
Oriental Research Institute publication,
Mysore–1982

31) History of classical sanskrit literature,
by M. Krishamachari,
Motilal Banarasidas publication, Delhi–1970

32) History of Mysore (1704–1766 A. D.) Vol–II
by C. Hayavadana Rao,
Chapter XIII Krishnaraja Wodeyar–II
Printed at the Government Press,
Bangalore–1946 (page No. 476 to 482)

33) New Catalogus catalogorum—volume-2
[An Alphabetical Register of Sanskrit
and Allied works and Authors]
Editor :—Dr. V. Raghavan,
University of Madras, Madras–1966

34) Puranic Encyclopaedia (In English)
by Vettam mani,
Motilal Banarasidas publication, Delhi–1975

35) The Mahabharatha,
Edited by V. S. Sukthankar and
S. K. Belvalkar, Bhandarkar
Oriental Research Institute, Poona–1958

36) Pradhana Venkappaiah—Poet and playwrite
(special article in English by M. P. L. Sastry, M.A.)
Published in : The Quarterly Journal
of the Mythic society Volume–31
July-1940 Banaloreg. (Page No 3652 ot.)

# SPECIAL INFORMATION ABOUT VENKAMATYA

## REFERENCE BOOK—'HISTORY OF MYSORE'

*Vol.—II*

*—By C. Hayavadana Rao*

**The vicissitudes of Bendur :**

Under the fostering care of Venkappaiya and as the result of the special interest taken by Haidar in it, Bednur grew for a while, in size. Its trade also increased. The idea that Haidar had determined on settling down here and the fact that he began building in it a palatial residence for himself (outside the old fort area) and had brought down actually his family to live with him, and had established in it his principal arsenals, which employed many hands in the manufacture of arms and ammunition, continued the old mint, and issued the old Ikkeri *Varaha* with but a few minor alterations in its legends, inspired confidence in the people that there would be continuity in adminstration. Haidar also gave great encouragement to merchants, and endeavoured to introduce the cultivation of mulberry and the rearing of silk-worms in and around Bednur. But all to no purpose Though for a time, the city and the country surrounding it showed signs of recovery, the charm would seem to have fled from the place and the curse of the Rani had evidently taken sure hold of it. It was not long before Haidar discovered that the place was not suited to be the capital of a State. When he retreated, after the fight at Rattihalli, towards it, he realized, as we shall see,[213] that the woods surrounding Bednur would prove his ruin, as they had proved the ruin of the Rani. He therefore, made up his mind to give up the idea of making it the capital of his Projected State. Sooner done than determined, he sent

213, See below.

away his family and treasure through the woods—through a secret path—to Seringapatam. This act of Haidar gave a set back to the growth of the place for ever thereafter. Anticipating a little we may add that what remained of its vanishing glory, it lost partly as the result of the wars with Tipu Sultan and partly through the Sultan's own acts. During the sieges it underwent—it was captured by the British in February 1783 under General Matthews and surrendered at the end of April of the same year—the palace and the town were burnt once again. Tipu tried to rebuild the town and to restore its trade but his regulations for the protection of the internal trade dealt a severe blow to its prosperity. The Kazi he appointed added to his own mite to its further destruction by pulling down the Christian Church and the Hindu temples and breaking to pieces numerous inscribed slabs and erecting a mosque from the ruins. In 1838, a local officer recorded the great decline that had taken place in its "wealth and population," its trade having been nearly all lost from the difficulty of access to it. *Sic transit gloria mundi*. No where do we realize as in ruined Bednur the truth of the famous Greek saying that a great city is a great solitude. But the city that Virammaji so valiantly defended is not, however, dead but lies sleeping. It may yet wake up when the trade routes change with the coming into being of the suggested harbour at Bhatkal.[214]

## Dewan Venkappaiah's degradation and death :

This account of Bednur since its conquest by Haidar may be fittingly concluded by a brief notice of the fate that overtook its first Dewan Venkappaiya (*Pradhan Venkappaiya*). Venkappaiya, who laboured for Bednur during the first seven years after it passed under Mysore, was known also as

214. Bhatkal is but 30 miles N. W. of Nagar via Kallurkatte, which in 1893 usurped the place of Nagar as the headquarters of the taluk named after itself.

Venkamatya. He belonged to a family of ministers, his father being Ramapuri Hampeyamatya, a name which indicates the hereditary secular office held by his ancestors.[215] He was evidently a member of the Aruveli Niyogi sect of Brahmans, and as such fit by birth and training for administrative office[216]. Well educated from early life in the arts and letters of the country,[217] he appears to have entered service under Rani Virammaji, about 1757, as an agent.[218] After working under her personally for a time, he seems to have been transferred to Hosangadi, in the present South Kanara district but then included in Bednur. What other posts he held after that, we do not know, but there is evidence to believe that to considerable administrative experience, he combined a high literary reputation that added to the well-merited gubernatorial dignity that Haidar conferred on him. Haidar, who had always an eye for good men, should, indeed; have selected him as the fittest person to take over the administration of Bednur at such a difficult time—shortly after its conquest and the quelling of a plot to assassinate him—thus making it appear that he but continued the administration of the country in the manner in which it had been conducted from time immemorial. Haidar, as was his wont, did not entirely leave all matters to him solely and wholly. He placed as second in command under him one Ujjanappa, a Kurubar by birth and a native of Bednur, described as an old servant of his and one who had been ennobled by him with the title of

215, His mother's name as given in his literary works was Vamamba.

216, Ke. N. V., XII, 218, f. n. 2, where he is spoken of as a Brahman niyogi under Virammaji.

217, As to his literary capacity, see his works referred to later in the text.

218, Ke. N. V., XII. l. c. A recent attempt to identify him with Pradhan Venkatapataiya of Kannambadi (Kanvapuri), an earlier minister of the reign of Krishnaraja II, is merely fanciful and thoroughly fails ro take note of the antecedents and details of tha early career of Venkappaiya (see Q.J.M.S., Vol. XXXI No, 1, pp. 36-38).

"Raja Ram".[219] Venkappaiya carried on the administration for sevèn years and did much to infuse confidence in the people that the change in the rulership of the country would not mean any unhappiness to them. So efficient, indeed, were his services at Bednur, that Haidar appointed him, while still in charge of Bednur, to investigate certain alleged frauds attributed to an official of the name o Timmappa in the Mysore territory *(Kartara-sime)*. This work he carried out with such ability that his labours ended in adding materially to the coffers of the State. He was as good apparently as a general as an administrator. For the next duty to which he was deputed was the quelling of risings, in 1770, of certain Palegars in Hassan including those of Maharajandurga, Belur, Vastare etc., Ujjanappa succeeding him at Bednur. We next see Venkappiya takiug part, in April 1771, in the action against the Mahrattas near Melkote, èscaping from the bottle-field there with Tipu. In the same year, about May 1771, he was deputed to the ruler of Coorg to negotiate for the passage of convoys to Seringapatam. Haidar showed his appreciation of his services by appointing him in 1772 to the post of Dewan of *Mahalati Cucheri* and in April 1774, put him at the head of the embassy which visited Raghoba at Poona, the other members being Appaji Ram and Harikar Narasappa Nayaka. Haidar next sent him, in the same year, as governor of Sira, Maddagiri and Channarayadurga. These eleven years of hard work, though they had brought him preferments and promotions, did not prove sufficient to win entirely Haidar's confidence. Haidar had indeed honoured him by his personal presence at his second marriage about November 1771, but did not, as was usual with him, entirely confide in him. He deprived him of his office, in 1779, on the ground of alleged misuse of power and forced him to make good revenues to the extent of 60,000 *varahas*, and after that sum had been

219. See f. n. 202 supra.

collected from him he was insulted and thrown into prison in Seringapatam, his authority *(amalu)* being withdrawn, though left with the empty title of *Pradhan* with an allowance of Rs. 1000. At the intercession of Appaji Ram, he was, however, released from prison, and summoned for military survice, but died of diabetes before joining, in November 1782.[220] Such was the manner in which Haidar requited his valuable services, services rendered under conditions which there is reason to believe Haidar himself highly appreciated at the time ! There was, as we shall see, an element of suspicion in the make-up of Haidar's character, which always undid the best of his instincts and made him the most ungrateful man that the world had ever known. There can be no doubt whatever that Venkappaiya rendered services in Bednur which smoothened matters greately for Haidar while they reconciled the population to the new regime and made possible the rebuilding of the State which warfare had greatly unsettled and ruined. From all accounts, Venkappaiya was not only a man of great capacity, both in the civil and military departments, but also of high integrity and honour. The charges trumped up against him—misuse of power and failure to collect revenue—were both unjust and incapable of proof. The object of preferring them was to put him out of the way, for he had grown big and may prove another Khande Rao ! Even if he had not entered the administrative service of the State, Venkappaiya would still have left a literary name behind him. He appears to have been the author of several Sanskrit and Kannada works, some at least of them having been written before he took up office. Among these are the following :—*Alamkaramanidarpanam, Kamavilasa-Bhanah, Mahendra-Vijayadimah, Viraraghaviya-Vyayogah, Lakshmisvayamvara-Samavakarah, Sitakalyana-Vithi, Rukmini-Svayamvarankah, Hanumajjayam (Hanumad-*

220. Hald. Nam., ff. 28, 42-4 , 47, 51-55, 69, 92.

*vilasa)* and *KarnataRamayanam* *(Ramakathamritasara)*.[221] Venkappaiya's name had spread far and wide at the time, as far as Poona on the one side and *Fort St. George* on the other, as both a skilful negotiator and an honourable minister.[222] Venkappaiya was succeeded in his office by his colleague Ujjanappa, in January 1770, when the former left Bednur, as stated above, to quell the Palegar disturbances in the Hassan country. As elsewhere noticed, a foreign observer, writing of Ujjanappa at the time, says that he held charge of the treasury at Bednur and was oppressive and extortionate in his methods.[223] But he passed muster under Haidar's *regime* because of those very habits, while the fate that overtook Venkappaiya, the honest and versatile officer who did much for Bednur's revival in the new order of things, shows that Haidar could go wrong hopelessly sometimes.

(History of Mysore (1704-1766 A. D.)
by C. HAYAVADANA RAO,
Vol.-II, Chapter XIII.
Krishnaraja Wodeyar-II.
Printed at the Government Press, Bangalore-1946.
(Page No. 476-482).

## PRADHANA VENKAPPAIAH—POET AND PLAYWRIGHT

*—By M. P. L. Sastry, M.A.*

VENKAPPAIAH was a minister of Mysore serving nominally under the Mysore Kings, Krishnaraja Wodeyar II,

221, Mys. Or-Lib. Mss., Nos. 2570 (P.L.), B. 341, 360 and A. 142-143 (P.) See also and compare Kar. Ka. Cha., III. 129-133.

222, His embasy to Raghoba at Poona has been mentioned above. As to Madras we note in the Fort St. George records, mention made of him; as Vingapah,, see Mily, Count, Corres., XXV. 226.

223. See f. n. 202 supra.

Nanjaraja Wodeyar and Bettada Chamaraja Wodeyar, but actually under Haider Ali from about 1763 A.D. till 1780 A.D. His activities, however, were not confined to matters of administration and court politics only. He was an eminent scholar in Sanskrit and Kannada and the many works that he has written bear evidence to his abilities as a writer of wide interests and catholic outlook. He was also interested in music and painting.

Venkappaiah played a very prominent part in the history of Mysore, during the eighteenth century. He belongs to village Ramapura which is mentioned in almost all his works and it is on the banks of the Kapini river near Cattnahalli about ten miles south-west of Mysore.

The history of Pradhana Venkappaiah can be built up from the following sources :—

1. *Maharajara Vamsavali*.
2. *Haider-Nama* (a manuscript in Kannada unearthed by the Archaeological Department, Mysore, which is a chronicle describing the detailed accounts of the events in the time of Haider.)
3. *Memoirs of Haider Ali from the year* 1758 to 1770 (An account of the manuscript in included in the *Annual Report of the Archaeological Department of Mysore for* 1937).
4. *History of Mysore* by Lieut. Colonel Mark Wills.

Venkappaiah lived in troublous times. Conditions at home were none too satisfactory. The atmosphere at the court was full of intrigues. The kings were not very powerful and the administration was usually in the hands of one or other of the king's favourites or relatives. At the time we are speaking about, the most powerful man in the country was Kalale Nanjaraja, father-in-law of the ruler Krishnaraja Wodeyar II. Nanjaraja, Sarvadhikari Nanjaraja as hs was called, was an able administrator. Though he wae

supposed to be in charge of only the Revenue and the Finance portfolios, actually his influence extended over every other department and his word was law, practically. However he failed to get full control over the army, as it was in the hands of a powerful man like Haider Ali. This Haider Ali was already gaining in prestige and power and in a short time he was able to displace Nanjaraja.

The country was not free from outside troubles either. The Marathas were leading in large armies again and again ; and every time, they had to be sent back with huge famous.

Venkappaiah was involved id all the intrigues at court and even in many negotiations with outside powers.

He began his life in a small way. He first won the favour of the king and got a footing in the Mysore administration.The two powerful people at the time in the country were (1) Kalale Nanjaraia and (2) Haider Ali. When Immadi Krishnaraja Wodeyar came to the throne in 1734 the administration of the country was overhauled. Venkappaiah who had become prominent and influential by then was appointed as the nominal Pradhan.[1] on condition of being in all things sub-servient to the will of Sarvadhikari Nanjaraj.For six years Venkappaiah conducted the Civil administration of the country with ability and intelligence. The Pradhan later on seems to have helped the 'king in overthrowing Nanjaraja. However, this did not help Venkappaiah, for Haider Ali who was becoming all powerful became the superior of the Pradhan. By the time Nanjaraja Wodeyar came to the throne, Venkappaiah's position had become quite secure and he was in charge of all the departments of the Government except the army.[2] Pradhana Venkappaiah was responsible for making a treaty with Raghoba who was about to seize Seringa patam on account of some misunderstanding between

1 History of Mysore. by Lieut. Co. Mark Wills, Vol. I, Chapter VII.
2 Maharaja Vamsavali,

